# सम्भाषणसन्देशः

Please login, read & listen to the original copy from below
https://www.sambhashanasandesha.in/openEbook?id=UVJWTVNaRlJhQlRUckJUUA==
एप्रिल् २०२४




सन्देशसारः (Index)



## April

## प्रतिस्पन्दः

फाल्गुनमासस्य सन्देशः समये प्राप्तः । रामचन्द्रमूर्तेः मुखपुटचित्रम् अतिमनोहरम् । लक्ष्मणमहाभागेन विरचितः लेखः श्रीरामगुणान् सर्वान् सुष्ठुतया विवृणोति । 'झारखण्डवासिनी ८५ वर्षीया श्रीमती सरस्वतीदेवी त्रिंशतः वर्षेभ्यः पूर्वं दृढसङ्कल्पं कृतवती यत् राममन्दिरनिर्माणपर्यन्तं मौनम् आचरिष्यामि' इत्येतत् पठित्वा आश्चर्यान्वितः अहम् । अयोध्यायां स्थितस्य राममन्दिरस्य विशेषाङ्कः इव विराजते अयम् अङ्कः इति तु मोदस्य विषयः । कलौ युगे रामस्य वनवासः ५०० वर्षात्मकः अभवत् खलु ! इतः परं रामराज्यम् आगमिष्यति इति विश्वासः सर्वेषाम् । 'भित्तौ उत्कीर्णाः सन्ति रामायणश्लोकाः' इति लेखः वाल्मीकिमहर्षेः भवनस्य निर्माणविषयं निवेदयति । 'स्मारं स्मारं सुखिनः स्याम' इति विभागे प्रकाशितायाः 'दैवात् रक्षितौ आवाम्...' इति अनुभवघटनायाः पठनात् दैवविश्वासस्य दृढता निरूपिता दृश्यते । यथापूर्वं बालमोदिनीकथाः संस्कृतसंस्कृत्योः अनुरूपाः विराजन्ते ।

- सुब्र.अनन्तरामः, चेन्नै (त.ना.)

'राम इति अभिरामेण..' मुखपुटचित्रं शोभनम् । सम्पादकीयं, रामसम्बन्धिलेखाः च ज्ञानप्रदायकाः । 'एषोऽहं रामः' इति लेखः यथार्थतां प्रतिपादयति । वयं रामायणं पठामः । किन्तु रामस्य अयनं विस्मृतवन्तः । आङ्ग्लजनानां निर्गमनस्य अनन्तरम् अस्मदीयाः जनाः, शासकाः, अधिकारिणः च रामशासनपरिपालने अनुत्सुकाः जाताः । अधुना देवानां पूः अयोध्या विराजते । रामसदृशः नायकः अपि देशे प्रजापालने निरतः अस्ति । रामनाम सर्वत्र श्रूयते । उत्तिष्ठत ! जाग्रत ! 'जन्मदिनस्य उपायनम्' इति कथा सर्वेषां नेत्रोन्मीलने सफला जाता । सत्यगवेषणस्य समाप्तिः कथं स्यात् इति कुतूहलम् अवशिष्टम् ।

- एम्.सुब्रह्मण्यभट्टः, मुडिपु (कर्णा.)

बालराममूर्तेः, राममन्दिरस्य च चित्रं मुखपृष्ठे आवहन्ती सम्भाषणसन्देशपत्रिका आन्तं पठिता । तदनुसृत्य सम्पादकीये 'अपि रामः तत्त्वस्य प्रतीकम्, न केवलं मूर्तिः' इति विवृतम् अस्ति रामायणविषयान् अधिकृत्य । 'एषोऽहं रामः' इति लेखे रामः किं चिन्तयन् स्यात् स्वस्य विषये इति बिन्दुभिः सूचितम् । 'पञ्चशतवर्षात्मकव्रतस्य पारणा' 'किञ्चन मौनव्रतम्' 'राममयः ग्रामः' 'मया दत्तं हि भक्तितः' 'मध्यप्रदेशस्य अयोध्या ओरछा' इत्यादयः रामसम्बद्धाः लेखाः रोचकाः आसन् । अन्ये अपि विषयाः अत्युत्तमाः आसन् । बालमोदिनीकथाः प्रेरणादायिन्यः ।

- कोट.श्रीकृष्णाहितानलः, कार्तट्टु (कर्णा.)

माचर्मासाङ्कः राममयः । अन्यत्र अनुपलभ्याः बहवः विशेषांशाः सन्ति तत्र । रामतत्त्वं सङ्क्षेपेण, किन्तु परिणामकारितया निरूपयति सम्पादकीयम् । 'मध्यप्रदेशस्य अयोध्या ओरछा' इति लेखः अतिविशिष्टः ।

- राममूर्तिः, तिरुवनन्तपुरम् (केरलम्)

माचर्मासाङ्कः रामविषयकः एव भवितुम् अर्हति प्रायः इति मया पूर्वम् एव ऊहितम् आसीत् । तथैव जातम् अपि । किन्तु मया यादृशी गुणवत्ता ऊहिता आसीत् ततोऽपि अधिकाः विशेषांशाः सन्ति अङ्के । 'जन्मदिनस्य उपायनम्' इति कथा उत्तमा ।

- वरुणः, बेङ्गलूरु (कर्णा.)

अतीव मनोरञ्जकेन साहित्येन परिपूर्णः वाचनीयः च अस्ति फेब्रवरीमासाङ्कः । अभिनन्दामि अहं मुखपुटचित्रकारम् । चित्रम् आह्लादकारकम् । हरितवर्णस्य छटाः, तेषु वर्णसंगतिश्च चित्रकारस्य कौशलं द्योतयति । प्रधानमन्त्रिणः लक्षद्वीपगमनस्य, तत्सम्बद्धानां चित्राणां जालपुटे आरोपणस्य च हेतुं सम्यक् विशदीकरोति सम्पादकीयम् । भारतम् आन्ताराष्ट्रस्तरे 'सबलम् आत्मनिर्भरं राष्ट्रम्' इति सर्वैः ज्ञायते । सर्वमान्यता अपि अस्ति । वस्तुस्थितिः एषा । तथापि तस्य पुनःप्रत्ययः पुनरुच्चारणं वा आवश्यकम् इति प्रधानमन्त्री सम्यक् जानाति । इयं राष्ट्रनीतिः । 'वर्तमाने वर्तितव्यम्' इति वेदान्ततत्त्वं शिक्षासु अन्यतमम् । 'एकपङ्क्त्यात्मकानि उद्धरणानि' उपदेशात्मकानि । तदनुसारेण जीवेम चेत् जीवनं सर्वसुखसन्तोषपूर्णं भवेत् ।

- राघवेन्द्रगर्दे, पुणे (महा.)

## सम्पादकीयम्

### सुलभ्यम् अपि प्राप्तुम् अप्रयासः

समग्रस्य जगतः चालकशक्तिः अस्ति सूर्यः । जगतः चैतन्यं तु सूर्यात् एव । अयम् एव सूर्यः 'डि'जीवसत्त्वम् अपि ददाति । ये सूर्यप्रकाशस्य सम्पर्कं प्राप्नुयुः ते सर्वे तत् 'डि'जीवसत्त्वं प्राप्नुयुः एव ।

गव्योत्पन्नानि, अण्डम्, नारङ्गम्, सोयाधान्यम् इत्यादिभ्यः एतत् जीवसत्त्वं प्राप्यते । सूर्यसम्पर्कात् तु तत् जीवसत्त्वं निश्शुल्कं प्राप्यते । रोगप्रतिरोधकशक्तेः उत्पत्तये एतत् जीवसत्त्वम् अत्यावश्यकम् । पौनःपुन्येन श्रान्तिः, खिन्नता, केशानां पतनम् इत्यादीन् विकारान् उत्पादयति डिजीवसत्त्वस्य अभावः ।

अद्य जगति डिजीवसत्त्वाभावग्रस्तता महता प्रमाणेन दृश्यते इति वदति अध्ययनम् । जगति शतकोट्यधिकाः जनाः, भारते नवचत्वारिंशत्कोट्यधिकाः च डिजीवसत्त्वाभावग्रस्ताः सन्ति इति श्रूयते । सूर्यात् आहारात् वा ये एतत् जीवसत्त्वं प्राप्तुं न शक्नुयुः तादृशेभ्यः वैद्याः सूच्यौषधरूपेण, गुलिकारूपेण वा तत् जीवसत्त्वं यच्छन्ति ।

भारते सूर्यप्रकाशः आदिनं प्राप्यते एव । पूर्वं जनाः कार्यकालादिषु सूर्यप्रकाशस्य सम्पर्कं बहुधा प्राप्नुवन्ति स्म । तस्मात् डिजीवसत्त्वाभावः समाजे अत्यल्पप्रमाणेन दृश्यते स्म । किन्तु अद्यत्वे जीवनशैली अन्या एव अस्ति । प्रयाणं क्रियते कार्यानादिषु । कार्यं क्रियते कार्यालयभवनेषु । वासः क्रियते गृहे । एवं दिनस्य भूयान् भागः सूर्यकिरणसम्पर्करहिततया याप्यते इत्यतः डिजीवसत्त्वाभावः बाधते अस्मान् । यस्मिन् देशे सूर्यकिरणानाम् अभावः एव नास्ति तत्रैव वयं डिजीवसत्त्वाभावम् अनुभवामः इति तु अहो विडम्बना !

पाश्चात्यदेशेषु बहुषु सूर्यकिरणसम्पर्कः विरलतया प्राप्यते । अतः ते भारतादीन् देशान् गत्वा धृतमित-वस्त्राः सन्तः समुद्रतीरादिषु शयानाः ‘किरणस्नानं’ कुर्वन्ति । किन्तु अस्माकं देशे न एषा स्थितिः । तथापि बालेषु ९०% डिजीवसत्त्वाभावः दृश्यते अद्यत्वे इत्येतत् यत् श्रूयते तत् किम् अस्मासु आश्चर्यं न जनयेत् ?

केषुचित् विद्यालयेषु छात्राः क्रीडादिनिमित्तम् अपि क्रीडाङ्गणं न गच्छन्ति । केषुचित् क्रीडावधिः भवति सायङ्काले । तस्मिन् काले आतपः डिजीवसत्त्वौत्पत्तये अनुकूलः न भवति । प्रातः दशवादनात् एकवादनाभ्यन्तरे यदि कांश्चन निमेषान् यावत् सूर्यकिरणसम्पर्कः भवेत् तर्हि डिजीवसत्त्वाभावग्रस्तता सर्वथा न भवेत् ।

आतपस्पर्शः म्लानतां जनयति इति भावयन्तः वयम् आतपस्पर्शरहितप्रकोष्ठान् व्यवस्थापयामः कालयापनाय । प्रयाणकाले अपि एवमेव आचरणम् । वेषभूषादिषु अपि अयमेव व्यवहारः । सूर्यकिरण-स्पर्शाभावः एव आधुनिकताद्योतकः इति चिन्तनम् । किम् एतादृशः व्यवहारः बुद्धिमत्तां द्योतयति ?

अस्मान् उपकर्तुं सूर्यः स्वकिरणान् प्रसारयति निर्बाधम् । वयं शरीरकोमलतादिमोहेन डिजीवसत्त्वप्राप्त्यवसरान् बहुधा निवारयन्तः स्वस्य अस्वास्थ्यं स्वयमेव स्वागतीकुर्वन्तः स्मः । अल्पप्रयत्नलभ्यं स्वास्थ्यं प्राप्तुं वयं वैद्येन निर्दिष्टानि सूच्यौषधगुलिकादीनि महता व्ययेन सेवमानाः आत्मानं 'महाविवेकिनं' भावयामः । अहो विसङ्गतिः एषा !!

## योऽनूचानः स नो महान्



डा. लक्ष्मीनारायणपाण्डेयः

**Email - dr.pandeylaxminarayan@gmail.com**

महर्षेः मनोः 'योऽनूचानः स नो महान्' इत्येषा उक्तिः महतां लक्षणं निरूपयति । जन्मतः कोऽपि महान् नैव भवति, अपि तु असाधारणपुरुषार्थेन, लोकोत्तरादर्शाचारेण, जिजीविषया च अनूचानतां प्राप्य जीवने महत्ता सम्पादनीया भवति । सूक्तिः इयं तत्रभवतः सद्यः ज्ञानपीठपुरस्कारेण सभाजितस्य स्वामिरामभद्राचार्यवर्यस्य विषये सङ्गच्छते । महामहोपाध्यायस्य तुलसीपीठाधीश्वरस्य जगद्गुरुरामभद्राचार्यवर्यस्य

जीवनं, चिन्तनं, वैदुष्यं, व्यक्तित्वं, कर्तृत्वञ्च सर्वथा अनितरसाधारणम्, अनुकरणीयं, स्तुत्यञ्च वर्तते इत्यत्र नास्ति सन्देहलेशः अपि ।

वर्तमाने आर्षपरम्परायाः प्रमाणभूतेषु आचार्येषु स्वामिवर्यः अन्यतमः अस्ति । विलक्षणप्रतिभासम्पन्नं व्यक्तित्वं तस्य । सः शास्त्रेषु यथा अप्रतिहतगतिः, तथैव लोकमङ्गलाय समर्पितचित्तः अपि ।

तेन सर्वदा उच्यते - 'मानवता मम मन्दिरमस्ति । अहं मानवतायाः पूजकः । ये च विकलाङ्गाः ते सन्ति मम महेश्वराः । अहम् अस्मि तेषां कृपाकाङ्क्षी' इति । अनया उदात्तभावनया तदीयं जीवनं व्याप्तं वर्तते ।

व्यक्तित्वम् - उत्तरप्रदेशस्य जौनपुरजनपदे शचीपुरग्रामे १९५० तमे वर्षे जनवरीमासस्य १४ दिनाङ्के मकरसङ्क्रान्तिपर्वदिने वशिष्ठगोत्रीये सरयूपारीणमिश्रवंशे सः जनिं लब्धवान् । एतस्य पिता पण्डितराजदेवमिश्रः । शचीदेवी एतस्य माता । अलौकिकलक्षणसम्पन्नस्य अस्य जन्मनाम गिरिधरमिश्रः इति । जन्मनः मासद्वयाभ्यन्तरे एव रोगकारणाद् अस्य नेत्रयोः ज्योतिः अपगतम् । अनया हृदयविदारकघटनया पितरौ दुःखसन्तप्तौ सञ्जातौ । ईश्वरेच्छा बलीयसी इति मत्वा परिजनाः कथञ्चित् धैर्यं धृतवन्तः । एवं भाति कदाचित् कौटुम्बिकप्रपञ्चात् बालकं गिरिधरं दूरीकर्तुं चर्मचक्षुषी अपसार्य ज्ञानचक्षुषी च प्रदाय ईश्वरः सन्तुष्टः स्याद् इति । ज्ञानचक्षुषोः उद्घाटनेन गिरिधरस्य प्रतिभायाः नैके आयामाः प्रस्फुटिताः अभवन् ।

शिक्षणम् - बालकस्य गिरिधरस्य मेधाशक्तिः स्मरणशक्तिश्च आ बाल्यादेव विलक्षणा आसीत् । वयसः पञ्चमे वर्षे सः समग्रां गीताम्, अष्टमे वर्षे पङ्क्तिशः समग्रं रामचरितमानसमहाकाव्यं च कण्ठस्थं कृतवान् । गृहे स्थित्वा एव श्रुत्वा श्रुत्वा, स्मारं स्मारं च सः व्याकरणकोशोपनिषत्प्रभृतीन् ग्रन्थान् कण्ठगतान् कृतवान् । अनन्तरमेव श्रीमतः रामवल्लभदासस्य कृपापात्रात् ईश्वरदासमहाराजात् श्रीराममन्त्रदीक्षां स्वीकृतवान् । ततः सः स्वामिरामभद्राचार्यनाम्ना प्रसिद्धः अभवत् । वैष्णवपरम्परायां दीक्षितः भूत्वा उच्चशिक्षायै सः काशीं गतवान् । तत्र सम्पूर्णानन्दसंस्कृतविश्वविद्यालयात् शास्त्रि-आचार्यकक्षयोः प्रथमं स्थानं स्वर्णपदकं च लब्धवान् । तत एव अभिनवपाणिनिः इति विख्यातस्य आचार्यस्य रामप्रसादत्रिपाठिनः निर्देशने 'अध्यात्म-रामायणे अपाणिनीयप्रयोगाणां विमर्शः' इति विषये विद्यावारिधिः इति उपाधिं, 'अष्टाध्याय्याः प्रतिसूत्रं शाब्दबोधसमीक्षणम्' इति विषये विद्यावाचस्पतिः इति उपाधिं च सः लब्धवान् ।

लोकमङ्गलम् - सर्वादौ स्वामिरामभद्राचार्येण रामकथायाः सर्वत्र प्रसाराय केन्द्ररूपेण १९८७ तमे वर्षे भगवतः रामचन्द्रस्य वनवासकारणात् तीर्थरूपेण विख्याते चित्रकूटे तुलसीपीठस्य स्थापना कृता । विगतेभ्यः आ षड्भ्यः दशकेभ्यः इतः एव भारते विश्वे च रामकथायाः मन्दाकिनी, कृष्णकथायाः कालिन्दी, वैदिकार्षग्रन्थानां सरस्वती च प्रवहन्ती भुवनं पुनाति ।

स्वामिनः अपरमेकं महत् कार्यं ज्ञातव्यम् । तदस्ति - जगद्गुरुविकलाङ्गविश्वविद्यालयस्य स्थापना । अयं विश्वविद्यालयः २००१ तमे वर्षे सप्टम्बर्-मासस्य २७ तमे दिनाङ्के स्थापितः । एतादृशः विश्वविद्यालयः देशे अयं प्रथमः । एतस्मिन् विश्वविद्यालये निराश्रयाणां विकलाङ्गबालकानां कृते शिक्षणप्रशिक्षणयोः उत्तमा व्यवस्था वर्तते । अत्र शिक्षिताः नैके छात्राः देशे तत्र तत्र सेवारताः वर्तन्ते । चित्रकूटे प्रज्ञाचक्षु-विद्यालयस्य स्थापना अपि तदीयं विशिष्टं कार्यम्




।

शास्त्रीयम् अवदानम् - २२ भाषाः जानता स्वामिना सर्वासु विधासु विपुलं साहित्यं विरचितम् । संस्कृत-हिन्दी-गुजराती-उड़िया-मैथिली-भोजपुरी-अवधी-व्रजप्रभृतिभिः भाषाभिः रचिताः अद्यावधि २२४ ग्रन्थाः तदीयाः प्रकाशिताः वर्तन्ते । तेन त्रीणि महाकाव्यानि रचितानि । 'भार्गवराघवीयम्' 'रामानन्दाचार्यचरितम्' इत्येते काव्ये संस्कृतेन, 'अरुन्धतीमहाकाव्यं' हिन्द्या च तेन रचितम् । पञ्च खण्डकाव्यानि अपि तेन रचितानि । तानि च - आजादचन्द्रशेखरचरितम्, लघुरघुवरम्, सरयूलहरी इति त्रयं संस्कृतेन काकाविदुरस मांशबरी इति द्वयं हिन्द्या च । 'श्रीराघवाभ्युदय'नाटकं संस्कृतेन, 'उत्साह' इति नाटकं हिन्द्या च । 'कुब्जापत्रनामकं पत्रकाव्यं संस्कृतेन रचितम् । 'राघवगीतिगुञ्जनम्' इति गीतिकाव्यं संस्कृतेन, 'भक्तिगीतसुधा' इति गीतिकाव्यं हिन्द्या च रचिते । श्रीरामभक्ति-आर्या-चण्डी-राघवेन्द्र-गणपति-राघवचरणचिह्नप्रभृतीनि षड् शतककाव्यानि अपि तेन रचितानि । तेन रचितानि स्तोत्रकाव्यानि तावत् -

गङ्गामहिम्नः स्तोत्रं, जानकीकृपाकटाक्षस्तोत्रं, रामवल्लभास्तोत्रं, चित्रकूटविहार्यष्टकं, भक्तिसारसर्वस्वं, श्रीराघवभावदर्शनं, नर्मदाष्टकं च इति सप्त । पञ्चदश भाष्यग्रन्थाः अपि एतदीयाः प्रकाशिताः सन्ति । तेषु 'ब्रह्मसूत्रेषु राघवकृपाभाष्यं', 'भगवद्गीतायाञ्च राघवकृपाभाष्यं' च प्रमुखम् । एतदतिरिच्य राघवकृपानाम्ना एव कठ-केन-माण्डूक्य-ईश-प्रश्न-तैत्तिरीय-ऐतरेय-श्वेताश्वतर-छान्दोग्य-बृहदारण्यकोपनिषदां भाष्यं, नारद-भक्तिसूत्रम् आधृत्य भाष्यं च कृतं विद्यते । रामचरितमानसग्रन्थस्य पठनं चतुस्सहस्राधिकवारं कृतवता स्वामिना अष्टवर्षाभ्यन्तरे पञ्चाशदधिकानाम् आवृत्तीनां समग्रम् अध्ययनं कृत्वा रामचरितमानसग्रन्थः (Critical Edition) सम्पादितः । तदीयः अयं ग्रन्थः प्रमाणत्वेन अङ्गीक्रियते तत्क्षेत्रे ।



प्रशस्तयः

१. तुलसीपीठाधीश्वरः - तुलसीपीठस्य स्थापनानन्तरं १९८७ तमे वर्षे रामानन्दीयवैष्णवैः प्रदत्तोपाधिः।

२. जगद्गुरुरामानन्दाचार्यः - १९८८ तमे वर्षे जून्मासे काश्यां, १९९५तमे वर्षे अगस्ट्मासे अयोध्यायां च वैष्णवानाम् अखाड़ापरिषदा अभिषिक्तः ।

३. धर्मचक्रवर्ती - हरिद्वारे महाकुम्भे विश्वधर्मसंसदि ।

४. महामहोपाध्यायः – २००२ तमे वर्षे लालबहादुरशास्त्रिविद्यापीठेन उपाधिरयं प्रदत्तः ।

५. भाऊदेवरसपुरस्कारः २००९ तमे वर्षे ।

६. महर्षिबादरायणपुरस्कारः २००३ तमे वर्षे ।

७. साहित्याकादमीपुरस्कारः २००५ तमे वर्षे ।

८. श्रीवाणी-अलङ्करणम् २००६ तमे वर्षे ।

९. भारतीयज्ञानपीठपुरस्कारः२०२४ तमे वर्षे ।

रामजन्मभूमिविवादे २००३ तमे वर्षे आचार्येण अनेन अलहाबादन्यायालये साक्षित्वेन उपस्थाय 'अयोध्या एव रामस्य जन्मस्थानम्' इत्येतत् रामायणपुराणोपनिषदादीनाम् आधारेण सप्रमाणं यत् प्रतिपादितम् तत् विशेषमहत्त्वम् आवहति । स्कन्दपुराणे राममन्दिरविषये यत् भौगोलिकं विवरणम् उपस्थापितं तदपि तेन तत्र विवृतम् । एतदीयाः विचाराः बहवः न्यायालयेन अन्तिमनिर्णये उल्लिखिताः । 'नेत्रहीनः कश्चन जनः जगतः एव मार्गदर्शकः भवितुम् अर्हति' इत्यस्य प्रत्यक्षम् उदाहरणम् अस्ति रामभद्राचार्यवर्यः ।

'अन्तर्मुखता यदि बहिर्मुखतां प्राप्नुयात् तर्हि जगत् एव अस्मदर्थम् उद्घाटितद्वारं भवेत् । रामे यदि विश्वस्येत तर्हि पर्वताकाराणि अपि कष्टानि लीलया विलीनानि भवेयुः । दैवशक्तौ सुदृढः विश्वासः भवेत् । तया दर्शितेन मार्गेण अग्रे सरणीयम् अस्माभिः । तदीया कृपा यावत् स्यात् तावत् न केनापि भेतव्यम् । दैवकृपा स्यात् चेत् एव ज्ञानं प्राप्येत । तत् ज्ञानम् एव तारकं सर्वत्र । भगवत्कृपां प्राप्तुं त्यागः भक्तिः च साधनम्' इत्यादयः रामभद्राचार्यवर्यस्य विचाराः जगतः एव मार्गदर्शकाः सन्ति ।

'निरन्तरश्रमः, चित्तैकाग्रता, आरब्धस्य कार्यस्य अन्तपर्यन्तम् अपरित्यागः, अनुशासनबद्धता इत्यादयः यस्मिन् जने स्युः सः अपूर्वां सिद्धिम् अवश्यमेव प्राप्तुम् अर्हेत्' इत्येतत् स्वव्यवहारेण एव दर्शितम् अस्ति आचार्यवरेण । 'यदि सङ्कल्पशक्तिः दृढा स्यात् तर्हि किं वा साधयितुं न शक्येत ?' इत्येतस्य उदाहरणम् अस्ति आचार्यवर्यस्य जीवनम् एव ।

अधुनापि स्वामिवर्यः साहित्यनिर्माणे, रामकथाप्रसारे, विकलाङ्गजनानां सेवायां च निरतः अस्ति । तदीयं जीवनं रामाय राष्ट्राय च समर्पितं वर्तते । तदीयं ध्येयवाक्यं वर्तते - 'श्रीरामः एव राष्ट्रम्, राष्ट्रमेव श्रीरामः' इति । तस्य शास्त्रनिष्ठा रामनिष्ठा च हृद्या,

वन्द्या, अनुकरणीया च वर्तते । तस्य आयुरारोग्याभ्युदयादयः अभिवर्धन्ताम् इति भगवन्तं प्रार्थयामहे ।

## पदरञ्जिनी – ३५३

पद्याण गोविन्दभट्टः

वामतः दक्षिणम्

२ लज्जा । पदारम्भे पर्णमस्ति, अन्ते लज्जैव । ३

५ दुर्गा । प्रजापतेः कन्या, सती, अरुन्धती वा । ४

६ क्षान्तः । इतच्प्रत्ययान्तः । ४



७ विडङ्गा, शिवो वा । (पुंसि) । ३

९ नदीसमुद्राणां तीरभागः । स्त्रियाम् । आघातो वा । ३

११ भोगी । सर्पः, स्मरः, हरः, कृष्ण इत्यपि । ३

१३ सुमेरुपर्वतः, कनकगिरिः, विसर्गरहितः । ५

१४ ग्रासः, मत्स्यविशेषो वा । ३

१६ बन्धनम् । उपरतिः । ३

१८ शोभनस्वभावयुता काचन सद्वृत्ता । ३

२० दाशरथेः मन्दिरम् । तदीयं गृहं वा । पुंसि । विसर्गरहितः । ४

२१ भविष्यत्कथनविषयः । स्यमानप्रत्ययान्तः शब्दः । ४

२२ रक्षणकर्ता । क्लीबे । आरम्भे बाणः अपि अस्ति । ३

उपरिष्टात् अधः

१ द्यूतविनोदः, स्त्रियाम् । ४

२ ध्वजः, स्त्रियाम् । वैजयन्ती वा । ३

३ वागुरा, नारी वा । मृगबन्धनार्थजालविशेषः, स्त्रियाम् । ३

४ नीडं, स्त्रियाम् । कुलायिका । ४

८ भाद्रशुक्लस्य हरिदिनम्, स्त्रियाम् । अस्यां विष्णुः शयने स्वाङ्गपरिवर्तनं करोति । ५

९ नागविशेषः । अयं परीक्षितं दष्टवान् । त्वष्टा, विश्वकर्मा वा । विसर्गरहितः । ३

१० द्रोणवायसः । क्लीबे तु कण्ठमणिः । ३

११ अग्रयादिविकोपात् युगान्ते भवति यः सर्वनाशः सः । विसर्गरहितः । ३

१२ तन्तुसन्तानम् । सूचीकर्म वा । ऊतिः, क्लीबे । ३

१५ अक्षरश्रेणी, अक्षराणां समूहः वा, स्त्रियाम् । ४

१७ रत्नहारः । स्त्रियाम् । मुक्तादीनां स्रक् । ४

१८ शोभना कीर्तिः, क्लीबे । विसर्गरहितम् । ३

१९ सौन्दर्यविशेषः, क्लीबे । मुक्ताफलच्छायातरलत्वसदृशं वपुषः मण्डनम् । ३

## पदरञ्जिनी - ३५२ (मार्च् - २०२४) उत्तराणि

वामतः दक्षिणम् -

१. जम्भभेदी ३. विष्णुपदी ५. वरदे ६. यमुना ८. असु ९. हीरकः ११. लीला १३. नासा १५.निनाद १७. स्वसा १८. दीर्घिका १९. शमनः २२. प्रतारणम् २३. जानकीशः

उपरिष्टात् अधः -

१. जरा २. दीर्घदेही ३. विनायकः ४. दीनः ५. वसु ७. नाली ८. अङ्गना १०. रसना

१२. लालसा १४. सादी १५. निकारणम्       १६. दशभुजा १७. स्वनः २०. विप्र २१. अंशः

पदरञ्जिन्याः (३५२) साधूत्तरं प्रेषितम् एतैः -

१. मधुसूदनहम्पीहोळि, धारवाड

२. पैङ्गानाडु वरमहालक्ष्मीः, शकटप्ुरम्

३. के.शिवरामभट्टः, बेट्टम्पाडिः

४. एम्.सुब्रह्मण्यभट्टः, मुडिपु

५. गो.अ.वे.लक्ष्मणाचार्यः, कडियम्

६. एल्.नागेश अडिगः, चिक्कमगलूरु

७. के.एम्.नरसिंहमूर्तिः, बेङ्गलूरु

८. विश्वनाथजोशी, फोण्डा

९. भारतीसत्यनारायण, के.जि.एफ्.

१०. एन्.ए.गोपालकृष्णभट्टः, शिवमोग्ग

स्मारं स्मारं सुखिनः स्याम

अवकरक्षेपणं न मार्गे

सतीश हेगडे, सिर्सि (कर्णा.)



मम सुहृत् कश्चन स्वीयम् अनुभवं यत् अश्रावयत् तत् अहम् अत्र विवृणोमि । सः सुहृत् 'गुटका'नामकं तमाखु-सुधा-पूगमिश्रणं सेवते स्म सर्वदा । कदाचित् नगरं गतः सः आपणात् तत् पूगमिश्रणं क्रीत्वा मुखे निक्षिप्य तत्सम्बद्धम् आवरणं मार्गपार्श्वे अक्षिपत् ।

विद्यालयं गच्छन् कश्चन बालः एतत् अपश्यत् । सः एतम् उपसर्प्य अवदत् - "श्रीमन् ! एतत् अनुचितं ननु ?"

सः मत्सुहृत् एतत् श्रुत्वा दिग्भ्रान्तिम् अनुभवन् - "किम् ? किं जातम् ?" इति अपृच्छत् ।

"एतत् गुटकावरणं भवता एव ननु क्षिप्तम् ? अस्माकं प्रधानमन्त्रिणा यत् उच्यते तत् भवता श्रुतम् एव ननु ? स्वच्छभारताभियाने वयं सर्वे भागभागिनः भवेम एव ननु ?" - बालकेन उक्तम् ।

किम् उत्तरं वक्तव्यम् इति अजानन् तस्य मुखम् एव निर्निमेषम् अपश्यत् मम सुहृत् ।

बालकः अपृच्छत् - "अवकरं भवान् अपनयेत् उत मया अपनेतव्यः सः ?"

"मास्तु मास्तु तव प्रयत्नः । अहम् एव अपनेष्यामि" इति उक्त्वा मम सुहृत् अवनम्य तत् गुटकावरणं स्वीकृत्य कोषे स्थापितवान् ।

“महोदय ! साधु साधु” इति वदन् सः बालकः विद्यालयदिशि अगच्छत् ।

एतां घटनां विवृत्य मम सुहृत् अवदत् - “तस्मात् दिनात् आरभ्य मया कोऽपि अवकरः मार्गे न क्षिप्यते” इति ।

## निकषोपलः - ३५६

डा के.वि. वासुदेवः, चालक्कुटी

अत्र प्रतिमासं दश शब्दाः दीयन्ते । एकैकस्य अपि शब्दस्य चत्वारः अर्थाः लिख्यन्ते । चतुर्षु एकतमः एव अर्थः साधुः भवति । कतमः तत्र साधुः अर्थः इति एतस्य पत्रस्य पृष्ठभागे एव उदाहरणसहितं निरूपितम् अस्ति । आदौ तावत् भवन्तः अन्यतमम् अर्थं विचिन्त्य निर्वाचयन्तु । ततः पृष्ठभागं पश्यन्तु ।

शब्दज्ञानवतां परीक्षास्थलम्, अन्येषां शब्दसङ्ग्रहमूलम्

**१. जीवधनम् (न.)**

(क) सम्पत्   (ख) गवादिकम्

(ग) जीवितम्   (घ) स्वायत्तधनम्

**२. स्फिरम् (वि.)**

(क) नक्षत्रम्   (ख) काष्ठम्

(ग) कुसुमम्   (घ) प्रवृद्धम्

**३. मङ्कते (भ्वादिः)**

(क) हन्ति (ख) निमज्जति

(ग) शोभते (घ) ईषत् हसति

**४. ह्वलति (भ्वादिः)**

(क) चलति (ख) आह्वयति

(ग) गच्छति (घ) ज्वलति

**५. पृथुकः (पुं.)**

(क) राजा (ख) चिपिटः

(ग) विप्रः (घ) शूरः

**६. विक्लवः (पुं.)**

(क) प्रोषितः (ख) दुःखितः

(ग) विह्वलः (घ) सन्तुष्टः

**७. नैर्ऋतः (पुं.)**

(क) यातुधानः (ख) कुबेरः

(ग) असुरः (घ) देवः

**८. शुभंयुः (पुं.)**

(क) शुभकारी (ख) शुभप्रेप्सुः

(ग) शुभान्वितः (घ) शुभरहितः

**९. खट्टङ्गः (पुं.)**

(क) खट्वाङ्गः (ख) खडः

(ग) खलः (घ) नीलकण्ठः

**१०. प्रालम्बः (पुं.)**

(क) कम्बलः (ख) सहायः

(ग) खडः (घ) कण्ठलम्बितहारः

पदसम्पत्

१. जीवधनम् (न.) = (ख) गवादिकम् । 'गोमहिष्यादिकं जीवधनं स्यात् पाशबन्धनम्' - (वैजयन्ती)

उदा - १. स एतस्मात् जीवधनात् परात् परम् । - (उपनिषत्)

२. वैश्याः जीवधनेन जीवितं यापयन्ति ।

२. स्फिरम् (वि.) = (घ) प्रवृद्धम् । 'स्फेयांश्च भवति स्फिरे' - (औणादिकपदार्णवः)

उदा - १. स्फिरभुजबल राजन् किं पुनर्भीष्म एषः । - (पूर्वभारतचम्पूः, १०-१५)

२. मूषकमार्जारयोः वैरं स्फिरं भवति ।

३. मङ्कते (भ्वादिः) = (ग) शोभते । 'परिष्करोत्यात्मनेऽलङ्करोति द्वे च मङ्कते' - (आख्यातचन्द्रिका)

उदा - १. समुत्पेतुः कराघातैरश्म्याकर्षैर्ममङ्किरे । - (भट्टिकाव्यम्, १४-१०)

२. उद्याने विविधानि कुसुमानि मङ्कन्ते ।

४. ह्वलति (भ्वादिः) = (क) चलति । ह्वल चलने । 'वलते वल्लते वेल्लत्येवं ह्वलति चेलति' - (आख्यातचन्द्रिका)

उदा - १. अदृश्यन्तानिमित्तानि प्राह्वलत् क्षितिमण्डलम् । - (भट्टिकाव्यम्, १७-१००)

२. पवनेन वृक्षाः प्राह्वलन् ।

५. पृथुकः (पुं.) = (ख) चिपिटः । 'पृथुकः पुंसि चिपिटे शिशौस्यादभिधेयवत्' - (मेदिनी)

उदा - १. दारिद्र्योद्रेकनित्यार्दितनिजदयिताप्रेरितो भूरितोषं

वेगात् तेऽगादगारं पृथुकमथ कुचेले कुचेलो दधानः । - (कृष्णगीतिः, ३१८)

२. गुडमिश्राः पृथुकाः बालानां प्रियङ्कराः भवन्ति ।

६. विक्लवः (पुं.) = (ग) विह्वलः । 'विक्लवो विह्वलः समौ' - (वैजयन्ती)

उदा - १. स जाततर्षोऽप्सरसः पिपासुस्तत्प्राप्तयेऽधिष्ठितविक्लवार्तः । - (सौन्दरनन्दम्, १०-४१)

२. युद्धे पराजिताः भटाः विक्लवाः प्रतिन्यवर्तन्त ।

७. नैर्ऋतः (पुं.) = (क) यातुधानः । 'यातुधानः पुण्यजनो नैर्ऋतो यातुरक्षसी' - (अमरः)

उदा - १. नाथे परेते खलु नैर्ऋतानां याताः परे ते च परेतभावम् । - (पूर्वभारतचम्पूः, ५-७८)

२. रावणः नैर्ऋतानां राजा आसीत् ।

८. शुभंयुः (पुं.) = (ग) शुभान्वितः । 'शुभंयुस्तु शुभान्वितः' - (अमरः)

उदा - १. वत्से शुभंयुः समयोऽधुना ते प्रस्थानयोग्यः समुपस्थितोऽयम् । - (पूर्वभारतचम्पूः, ६-२५)

२. गुरूणाम् अनुग्रहेण नरः शुभंयुः एधते ।

९. खटुङ्गः (पुं.) = (ग) खलः । 'खदुङ्गाः खलाः' - (अलककृतहरविजयटीका, पु.४९१)

उदा - १. व्यक्तं खटुङ्गजनतापिहितात्मनोऽपि निर्मत्सराः सततमुन्नमयन्ति साधोः । - (हरविजयम्, ३८-३०)

२. खटुङ्गाः परेषां पीडने तत्पराः भवन्ति ।

१०. प्रालम्बः (पुं.) = (घ) कण्ठलम्बितहारः । 'प्रालम्बं कण्ठलम्बितम्' - (वैजयन्ती)

उदा -१. प्रालम्बयष्टिघटितारुणरत्नखण्डप्रेङ्खन्मयूखनिकुरुम्बपिशङ्गगर्भा ॥ - (हरविजयम्, ३७-१८)

२. युवतयः प्रालम्बेन हारेण शरीरम् अलङ्कुर्वन्ति ।

परीक्षापरिणामः

निर्वाचितस्य एकैकस्य साधुशब्दार्थस्य एकैकः अङ्कः । स्वयमात्मा परीक्ष्यताम् । आहत्य दश अङ्काः । भवन्तः श्रेणीं स्वयं निश्चिन्वन्तु ।

०९ - १० अङ्काः - प्रथमा श्रेणी

०७ - ०८ अङ्काः - द्वितीया श्रेणी

०५ - ०६ अङ्काः - तृतीया श्रेणी

## गीतम्

## भातु नो हृदन्तरे श्रीराममन्दिरम्

सर्वलोकवन्दितं चिरप्रतीक्षितं

सतामतुलयत्ननिर्मितं वरम् ।

सत्यधर्मबोधनप्रतीकमद्भुतं

भातु नो हृदन्तरे श्रीराममन्दिरम् ॥

भक्तवृन्दवक्त्रगलितनुतिसुपूरितं

राम राम राम राममन्त्रपावितम् ।

निखिलकल्मषौघदहनदक्षमनुपमं

भातु नो हृदन्तरे श्रीराममन्दिरम् ॥

भवभयापहं सदानुभूतिदायकं

शमदमादिसाधकं समस्ततापहम् ।

हृदयकमलभरितकिल्बिषापवारकं

भातु नो हृदन्तरे श्रीराममन्दिरम् ॥

भव्यभूतकालनित्यस्मारकोपमं

दिव्यकर्मचोदकं स्वधर्मपोषकम् ।

नव्यदृष्टिदं नु स्वाभिमानवर्धकं

भातु नो हृदन्तरे श्रीराममन्दिरम् ॥

नृशंसवृन्दभञ्जितं पवित्रमन्दिरं

नृसिंहतुल्यविक्रमैः पुनः सुयोजितम् ।

समस्तभारतीयचित्तनित्यतोषकं

भातु नो हृदन्तरे श्रीराममन्दिरम् ॥

* रणजित् को (केरलम्)

यत्किञ्चिदौषधं दद्यात् पथ्यं तु कठिनं वदेत् ।

आरोग्यं वैद्यमाहात्म्यात् अन्यथात्वमपथ्यतः ॥ - कलिविडम्बनशतकम्

चिकित्सार्थं यः आगच्छेत् तस्मै औषधं यत्किमपि दातव्यम् । कठिनं पथ्यं तु अवश्यम् एव वक्तव्यम् । यदि रोगी स्वस्थः भवेत् तर्हि तत् वैद्यस्य माहात्म्यस्य कारणतः इति तु सिद्धं भवति एव । यदि स्वास्थ्यलाभः न जायेत तर्हि तत् अपथ्यकारणतः इति प्रतिपादयितुं शक्यम् ।

## कथा

## संन्यासी

* कन्नडमूलम् - कुवेम्पुः

अनु – विजयाभट्



[गृहीतसंन्यासः चैतन्यः गङ्गायमुनयोः सङ्गमे उपविश्य निसर्गलीलां पश्यति । मुकुन्दस्य स्नेहः तं वशीकरोति । सः एव स्नेहः पाशत्वं यदा प्राप्नोत् तदा चैतन्यः दिग्भ्रान्तः । गुरोः मार्गदर्शनम् अयाचत् सः । तत् तु प्राप्तम् । किन्तु तत् कीदृशम् ?...]

नीरवशान्तिः सर्वत्र प्रसृता आसीत् । पूर्णिमायाः पूर्णचन्द्रः स्वस्य अस्तित्वं दर्शयितुं सुदूरे आकाशे मेघानां मध्ये लीलया निलीयमानः प्रकाशमानः च अग्रे सरति स्म । मनोहारिणी चन्द्रकान्तिः गङ्गायमुनयोः सङ्गमे स्वामपि योजयन्ती सर्वत्र प्रसृता आसीत् । प्रयागक्षेत्रस्य काननानि कौमुद्याः ज्योत्स्नायां निमज्ज्य शयितवन्ति आसन् । शीतलवायुः कुड्मलानि चुम्बन् तत्र तत्र मन्दं मन्दं गच्छन् स्वीयां प्रेयसीं मार्गमाणः विरही इव अदृश्यत ।

गङ्गायमुनयोः सङ्गमस्थलस्य समीपे एव सिकतायां स्थितस्य शिलाखण्डस्य उपरि पद्मासनं धृत्वा उपविष्टवान् ब्रह्मचारी चैतन्यः शुभ्राकाशस्य वैभवम् आस्वदमानः आसीत् । इदमिदानीम् एव ध्यानं समापितवतः तस्य मनः हृदयञ्च बाह्ये विद्यमानाभ्यां शान्तिसौन्दर्याभ्याम् इतोऽपि शान्ते अभवताम् । आकाशे द्योतमानानाम् असङ्ख्यानां नक्षत्राणां, देदीप्यमानस्य चन्द्रस्य, गच्छन्त्याः मेघमालायाः, मिलित्वा गच्छन्त्योः गङ्गायमुनयोः च दर्शनात् सृष्टिकर्तुः भव्यतां प्रशंसत् आसीत् चैतन्यस्य मनः ।

एवम् उपविष्टवान् चैतन्यः अन्तर्मुखः भूत्वा स्वकीये जीवने यानि सोपानानि आरुह्य आगतं तानि पुनः आलोकमानः आसीत् । अनेकानि दृश्यानि स्मरणे आगतानि । कानिचन दृश्यानि स्पष्टतया, कानिचन अस्पष्टतया च स्मर्तुं शक्तवान् सः । वर्षद्वयात् पूर्वं गृहं परित्यज्य गुरोः अन्वेषणं कुर्वता आटम् आटम् अन्ते प्रयागक्षेत्रस्य स्वामिनः प्रेमानन्दवर्यस्य शिष्यत्वं स्वीकृत्य संन्यासजीवनम् आश्रितं यत् तत्सम्बद्धाः सर्वाः घटनाः तेन स्मृताः ।

तावता पृष्ठतः कश्चिद् अपृच्छत् - “किमेतत् चैतन्य ? आ बहोः कालतः उपविष्टवान् एव अस्ति भवान् ?” इति ।

चैतन्यः ध्वनिना एव अभिज्ञाय परावृत्य - “आगच्छ मुकुन्द !” इति वदन् मृदु अहसत् ।

“ध्यानमग्नः स्यात् भवान् ।...” - मुकुन्दः अवदत् ।

“सृष्टिसौन्दर्यं वीक्षमाणः आसम् । अहो, कीदृशी शान्तता वर्तते अस्यां यामिन्याम् !!”

“आम् । अत्यन्तरमणीया निशा । परन्तु संन्यासिनि कवित्वं वर्तेत इति भावना मम न आसीत् पूर्वम् ।..”

“किमर्थम् एवं वदति भवान् ? संन्यासी कश्चित् पाषाणखण्डः किम् ?”

“योगः चित्तवृत्तिनिरोधः इति भवान् एव उक्तवान् किल ?” - मुकुन्दः अवदत् ।

“चित्तवृत्तिनिरोधः इति उक्ते कश्चित् अभावः वर्तते इति किम् ? योगः आत्महत्या न मुकुन्द ! प्रपरह्यः एव गुरुदेवेन उक्तं किल - समत्वं योग उच्यते इति । तस्य व्याख्यानं न श्रुतं किम् ? किमर्थं तत्र स्थीयते ? आगम्यताम् । अत्रैव उपविश्यताम्” - चैतन्यः अवदत् ।

मुकुन्दः चैतन्यस्य समीपं गत्वा उपविश्य तमेव निर्निमेषम् अपश्यत् । चैतन्यस्य मुखे किञ्चित् अलौकिकज्योतिः लसति इति अभासत । तस्य नेत्रे अनन्तम् अपि भिन्दमाने इव देदीप्यमाने आस्ताम् । पाटलवस्त्रं धृतवतः तस्य गम्भीरव्यक्तित्वम् इहलोके अविद्यमानेन सौन्दर्येण युक्तं कञ्चित् दिव्यपुरुषं स्मारयति स्म । मुकुन्दस्य हृदयस्पन्दः अवर्धत । नेत्राभ्यां द्वित्राः अश्रुबिन्दवः अस्रवन् । परन्तु तत् चैतन्यः न दृष्टवान् । यतः सः मुखं परिवर्त्य उपविष्टवान् आसीत् ।

स्वामिनः प्रेमानन्दस्य आश्रमं मनःशान्त्यर्थम् अनेके भक्ताः आगच्छन्ति । मुकुन्दः तेषु अन्यतमः । संन्याससस्वीकरणस्य सार्धैकवर्षस्य अनन्तरम् एकस्मिन् दिने यदृच्छया चैतन्यः एनं भक्तवृन्दे अपश्यत् । तस्मात् आरभ्य तयोः मित्रत्वम् आरब्धम् । अनेकवारं मुकुन्दः अपि चैतन्येन सह तत्त्वशास्त्रस्य गभीरान् विषयान् अधिकृत्य अचर्चयत् । अनेकवारं नद्याः परिसरे एतेन सह सञ्चारम् अकरोत् । एवं कुर्वतोः तयोर्मध्ये गाढः मैत्रीभावः अवर्धत । चैतन्यः असाधारणः कश्चित् जनः इति मुकुन्देन ज्ञातम् एव । अतः एव तस्मिन् मुकुन्दस्य विशेषगौरवम् । चैतन्यस्य अपि मुकुन्दे अनिर्वचनीयं प्रेम । तस्य सारल्यमनोभावेन एव चैतन्यः एनं प्रति आकृष्टः आसीत् । स्वामिनः प्रेमानन्दस्य अपि मुकुन्दे अतिशयितः विश्वासः । मुकुन्दः आश्रमे आ बहोः कालात् वसति स्म ।

चैतन्यः यदा मातापित्रोः विषये किमपि पृच्छति तदा मुकुन्दः - “अद्य न । पुनः कदाचित् वक्ष्यामि” इति वदति स्म । एकदा चैतन्येन पृष्टे सः रोदनम् एव आरब्धवान् इति कारणतः तं तस्य विषये अग्रे कदापि न अपृच्छत् चैतन्यः ।

प्रतिदिनं सायं गुरोः उपदेशस्य अनन्तरं भक्तवृन्दस्थाः प्रेमानन्दसाधोः पादस्पर्शनं कृत्वा गृहं प्रति गच्छन्ति स्म । मुकुन्दः तु चैतन्येन साकं नद्याः तटे परिभ्रमणं कृत्वा रात्रौ एव प्रत्यागच्छति स्म ।

यथाक्रमम् एतस्मिन् दिने अपि भ्रमणार्थं प्रस्थितः चैतन्यः मुकुन्दम् आहूतवान् । परन्तु मुकुन्दः - "गुरुदेवेन सह सम्भाषणं कृत्वा आगमिष्यामि । केचन विषयाः मया ज्ञातव्याः सन्ति" इति उक्तवान् । अतः चैतन्यः एकाकी आगत्य यथावत् नद्याः तटे अटित्वा शिलाखण्डस्य उपरि उपविष्टवान् ।

तस्यां प्रशान्तायां रात्रौ चन्द्रमसः ज्योत्स्नायां सर्वत्र प्रसृतायाः वालुकायाः राशेः मध्ये चैतन्यः मुकुन्दः च स्वप्नसदृशौ इव मौनेन उपविष्टवन्तौ । नद्याः जलं मञ्जुलनादं कुर्वत् प्रवहति स्म । आकाशे ताराः द्योतमानाः आसन् । चन्द्रः स्वस्य प्रयाणे मग्नः आसीत् ।

"मुकुन्द ! किमर्थम् एवं मौनेन उपविष्टम् ?" - अपृच्छत् चैतन्यः ।

"अद्य मम हृदयान्तराले सुप्ता काचित् तिग्मयातना प्रबुद्धा अस्ति !" - मुकुन्दः अवदत् ।

"एवम् !! ईदृश्यां शान्तसौन्दर्यभरितरात्रौ किमर्थं यातना ?" - चैतन्यः तं पृष्टवान् । "आं चैतन्य, मम मनसि शान्तिः नास्ति । तत्त्वज्ञानेन शान्तिः लभ्येत इति आशा आसीत् । सा विफलीभूता । मम शान्तिः दिनेषु गच्छत्सु दूरं दूरं गच्छन्ती अस्ति" - मुकुन्दः प्रत्यवदत् ।

"तथा मा वदतु । परमात्मनि दृढभक्तिः भवतु । शान्तिः लभ्येत एव" इति चैतन्यः तस्य सान्त्वनम् अकरोत् ।

"भक्त्या एव सर्वं कुर्वन् अस्मि । तथापि मम मनसि केचन प्रश्नाः सन्ति । परिहर्तुं शक्नोति किं भवान् ?" इति उक्त्वा क्षणकालं विरम्य मुकुन्दः कथनम् अनुवर्तितवान् - "एकं विना द्वे न भवतः इति भवता अनेकवारम् उक्तम् । तस्य गूढार्थः कः ? विविधैः वस्तुभिः दृश्यमानं जगत् एकं कथं भवेत् ? एवं वदामः चेत् मूले एव कुठारस्थापनं किल ?"

चैतन्येन उक्तम् - "हे मुकुन्द ! वस्तूनि भिन्नानि दृश्येरन् । परन्तु सर्वेषाम् अन्तर्यामी अन्तरात्मा तु एकः एव ! गुप्तगामिनी चैतन्यवाहिनी तु सर्वत्र प्रसृत्य अदृश्यरूपेण प्रवहति । एतत् एव एकमेवाद्वितीयम् इति वदन्ति प्रज्ञाः ।"

“परं सृष्टेः उद्देशः कः स्यात् ?” इति मुकुन्दः अपृच्छत् ।

“भगवतः लीलायाः उद्देशः भवेत् असंवेद्यः” - चैतन्यः अवदत् ।

“लीला इति वदामः चेत् तस्य विरोधभावेन गमनं दोषाय खलु ?” - मुकुन्दः अपृच्छत् ।

“आम् । सत्यम् उक्तं भवता ।”

“एवं चेत् एकमेवाद्वितीयम् इति उक्तिः लीलां बाह्यतः यः पश्येत् तस्य कृते ननु ? अस्माकं कृते न युज्येत” - मुकुन्दः पुनः प्रत्यवदत् ।

“निश्चयेन ।...”

“संन्यासस्वीकरणं लीलायाः विरोधत्वेन भवति खलु?” - मुकुन्दः चैतन्यं पुनः पृष्टवान् ।

“न । तत्तु कठिनतरस्य यत्नस्य लीला” - चैतन्येन उक्तम् ।

“एवं चेत् संन्यासत्वं साहसमात्रम् इति अर्थः किम् ?” - मुकुन्दः अपृच्छत् ।

चैतन्यः किमपि न अवदत् । सः विचारमग्नः जातः । किञ्चित्कालानन्तरं सः अवदत् - “मुकुन्द ! सृष्टिः अनुभवैकवेद्या । सृष्ट्याः जटिलत्वं सम्भाषणेन स्पष्टीकर्तुं न शक्नुमः इत्येतत् प्रेमानन्दगुरोः वचनम् ।...”

“चैतन्य ! एतस्याः पूर्णिमायाः रात्रेः हृदयस्पर्शि सौन्दर्यं भवता अनुभूयते किम् ?” - मुकुन्दः तं पृष्टवान् ।

“आम् । सौन्दर्यं परमात्मनः सृष्टिः एव खलु ?”

“संन्यासिनः मनः सौन्दर्येण बद्धं भवेत् किम् ?” - मुकुन्दः पुनः अपृच्छत् ।

"आनन्देन बद्धं भवितुम् अर्हत् मनः किमर्थं सौन्दर्येण बद्धं न भवेत् ? परन्तु संन्यासिनः कृते सौन्दर्यं परमात्मनः कश्चित् अंशः भवेत्, न तु अहङ्कारपोषकः भोगः । सः सृष्टिसौन्दर्ये मग्नः भवेत् !" - चैतन्यः विवृतवान् ।

मुकुन्दः अवदत् - "एवं चेत् भवान् भवतः उपरि एव उपविष्टवान् न स्यात् ।"

चैतन्यः अधः दृष्ट्वा - "न ! अहम् अचेतनशिला न !" इति वदन् मन्दम् अहसत् ।

"भवान् पौनःपुन्येन मम मातापित्रोः विषये मूलस्थानविषये च पृष्टवान् । मया तद्विषये किमपि न उक्तम् ।..."

"तस्य कथनं भवतः मनसा अङ्गीकृतं न स्यात् । ..."

तावता मुकुन्दः मनः अमन्दीकृत्य तमेव पृष्टवान् - "भवतः मातापित्रोः विषये अहं किमर्थं न वक्तव्यः ?"

"संन्यासिनः पूर्वाश्रमविषये न वक्तव्यम् इति नियमः वर्तते" इति अवदत् चैतन्यः ।

"तद्भवतु । अद्य अहं वदानि किम् ?" - अपृच्छत् मुकुन्दः ।

"मम कुतूहलं तु अस्ति एव श्रोतुम्" - अवदत् चैतन्यः ।

"परन्तु मम किञ्चन भयम् अस्ति ।..."

"किमर्थं भयम् अनुभूयेत भवता ? उच्यतां निर्भयम्" - अवदत् चैतन्यः ।

"भवान् मां तिरस्कुर्यात् इति भयं मम ।.."

"संन्यासिनः कमपि न तिरस्कुर्वन्ति । भवान् तु मम प्रियमित्रम् । तादृशं भवन्तं कथं वा तिरस्कुर्याम् अहम् ?" - चैतन्येन धैर्यवचनानि प्रोक्तानि ।

“संन्यासी कमपि किं न तिरस्करोति ?” - पुनः पृष्टवान् मुकुन्दः ।

“न । निश्चयेन न तिरस्करोति संन्यासी” इति सुदृढम् अवदत् चैतन्यः ।

“प्रेयसीं सः किं न तिरस्कुर्यात् ?” - मुकुन्दः मन्दं पृष्टवान् ।

चैतन्यः किञ्चित्कालं मौनम् आश्रित्य उक्तवान् - “अहं तस्याः अवस्थायाः बहिर्भूतः अस्मि ।...”

मुकुन्दः आरब्धवान् - “अहम् अद्य गुरुदेवस्य समीपं गतवान् - अत्र आगमनात् पूर्वम् ।...”

“एवम् !! किमर्थम् ?” - चैतन्यः अपृच्छत् आश्चर्यान्वितः सन् ।

“काञ्चित् भिक्षां याचितुम् ।”

“किं संन्यासिभ्यः भिक्षा याच्यते ?”

“आम् । भिक्षा मया अयाच्यत” - मुकुन्दः अवदत् ।

“दत्तवान् किं भिक्षां गुरुदेवः ?” - चैतन्यः पृष्टवान् ।

“आम्, तेन भिक्षा दत्ता । सः अस्ति महात्मा ।..”

“का सा भिक्षा? भवते अपि सः संन्यासदीक्षां दत्तवान् किम् ?”

मुकुन्दः अवदत् - “परन्तु भवान् न अनुमन्येत चेत् तेन दत्तायाः भिक्षायाः परिपूर्णता न भवेत् । भिक्षायाः सार्थकताम् अहं न प्राप्नुयाम् । ...”

"यदि तेन दत्तं स्यात् तर्हि मया अपि अनुमतम् इव । संशयः नास्ति तत्र" - चैतन्यः उदतरत् ।

"भवान् अपि दास्यति किम् ?" - मुकुन्दः अपृच्छत् ।

"आम् । दास्यामि, का भिक्षा सा ?" - चैतन्यः अपृच्छत् ।

- २ -

तस्मिन् सायङ्काले गुरोः उपदेशस्य अनन्तरं भक्ताः सर्वे गुरुं नमस्कृत्य गतवन्तः । गुरुः एकाकी एव उपविष्टवान् आसीत् । अहं तम् उपसृत्य साष्टाङ्गं नमस्कृतवान् ।

गुरुः आशिषा अनुगृह्य - "सर्वं कुशलं किं मुकुन्द ?" इति पृष्टवान् ।

"आम् गुरुदेव ! भवतः कृपया..."

"भवतः ध्यानं सुष्ठु प्रचलत् अस्ति किम् ?"

"न गुरुदेव ! हृदये कापि अशान्तिः ।.."

"तस्याः कारणम् ?"

"अतः एव आगतं मया । भवतः क्षमां  याचितुम् ।.."

आश्चर्यान्वितः सन् गुरुदेवः अपृच्छत् - "कः दोषः कृतः भवता ?"

"मया पापं कृतम् ।...."

"किं पापं कृतं भवता ?"

“अहं कपटवेषधारी !”

“भवान् एकः एव वेषधारी न । समस्तं जगत् एव तथा । भगवन्तम् अपि कपटनाटकसूत्रधारी इति एव वदामः किल ?”

“मम कापट्यस्य विषयः अन्यः । वेषधारी अहम् ।...”

पुनः आश्चर्येण गुरुदेवः अवदत् - “एवम् !! किमर्थं वस्तुस्थितिः न वक्तव्या भवता ? वद ।...”

अहं सशब्दम् उच्चैः रोदितुम् एव उद्यतः अभवम् । गुरुदेवः मृदुवचनैः मम समाश्वासनम् अकरोत् ।

अहम् अवदम् - “गुरुदेव ! केवलैः वचनैः मम दुःखस्य शमनं न भवेत् ।”

“एतस्य अर्थः कः ? किम् अपेक्ष्यते भवता ?”

“काञ्चित् भिक्षां याचितुम् आगतवान् अस्मि अहम् ।..”

गुरुदेवः पृष्टवान् - “का सा भिक्षा ?”

“सम्बन्धभङ्गः भवेत् इति भयं मम । यदि हताशः भवेयं तर्हि मृत्युः एव मम गतिः” - अहम् अवदम् ।

“मा भैषीः । धैर्यं वह । वद, किम् अपेक्ष्यते” इति गुरुदेवः उक्तवान् ।

“गुरुदेव ! षड्भ्यः मासेभ्यः पूर्वम् अत्र आगतवान् अहम् । भवतः चरणसंनिधौ शान्तिं प्राप्तुं बहुधा यत्नम् अकरवम् । परन्तु फलशाली न अभवम् । मम हृदयं बलशालि नास्ति । महत् भयं वर्तते । अतः अद्य भवतः पुरतः सत्यं निवेद्य मम जीवनस्य अन्तिमं निर्णयं कर्तुम् इच्छामि । भवान् अनुग्रहीष्यति चेत् अहं जीवेयम् । नो चेत् विनंक्ष्यामि” - मया उक्तम् ।

गुरुदेवः प्रसन्नवदनः सन् मम मुखम् एव निर्निमेषदृष्ट्या अपश्यत् । अहं सहसा मम शिरस्त्राणम् अपसार्य गुरुं नमस्कृतवान् । दीर्घकेशी सीमन्तिकः च अहं स्त्री इव अदृश्ये ।

गुरुदेवः शान्तचित्तया अविचलितः च सन् पृष्टवान् - "किमेतत् मुकुन्द ?"

"अहं मुकुन्दः न । रमेशस्य पत्नी इन्दिरा अस्मि ।"

"चैतन्यस्य भवत्याः च कीदृशः सम्बन्धः ?"

"सः चैतन्यः न । सः मम पतिः रमेशः ! गुरुदेव ! सः मां परिणीय कतिपयेषु दिनेषु समतिक्रामत्सु अदृश्यः जातः । मम श्वश्रूश्वशुरौ शोकतप्तौ सन्तौ दिवङ्गतौ । एषः रमेशस्य दोषः इति अहं न वदामि । सः न निन्द्यः । यतः सः विवाहाय सम्मतिं न दत्तवान् एव । विरक्तिभावः तस्य । सः संन्यासी भवेत् इति भीत्या झटिति बलात्कारेण तमपि अपृष्ट्वा विवाहं कारिन्तवन्तौ मम श्वश्रूश्वशुरौ । अतः सः कमपि अवदन् गृहं त्यक्तवान् । मम जीवनं मरुभूमिः इव अभवत् । सर्वे मां दोषिणीम् इव दृष्टवन्तः । अतः रमेशः कुत्र गतवान् इति अन्वेषणार्थं वेषं धृत्वा सर्वत्र अटित्वा भवतः सन्निधौ सः अस्ति इति विज्ञाय अत्र आगत्य मम इष्टदेवं दृष्टवती समाकुला अहम् । तदीयं स्नेहम् अपि अहं सम्पादितवती । परन्तु सः गुरुदेवस्य चैतन्यः । मुकुन्दस्य सुहृद् । इन्दिरायाः प्रियतमः न । अनवद्या अनाथा अहम् । पतिभिक्षां याचे । भवान् सर्वज्ञः, महात्मा च । मम जीवदानं कृपया क्रियताम् ।" इति सर्वं व्यवृणवं सङ्क्षुब्धहृदया अहम् ।

"पुत्रि ! चैतन्यः एतं विषयं जानाति किम् ?"

"न हि गुरुदेव !"

"संन्यासी पुनः संसारी भवेत् यत्, तत् भवेत् महापापाय ! चैतन्यस्य इष्टं न एतत् ।..."

"पाणिगृहीत्र्याः दुःखसागरे क्षेपणात् यत् पापं प्राप्येत ततः अपि अधिकं महापापं किम् एतत् ?"

गुरुदेवः अवोचत् - "अपरः विषयः नाम चैतन्यः महावैरागी ।.."

"रमेशस्य हृदये कठिनता नास्ति गुरुदेव ! मया ज्ञायते । भवतः अनुज्ञा अस्ति चेत् अलम् । भवतः आशीर्वादाः किमपि किल्बिषम् अनिष्टं चापि भस्मीकुर्युः । भक्त्या भवन्तं याचे" इति अवदम् अहम् ।

"पुत्रि ! मम अनुज्ञा अस्ति । मम आशीर्वादः अपि अस्ति । अहं पाषणहृदयः इति मा चिन्तय । भवत्याः साहसं कार्यसिद्धिं दद्यात् । भवत्याः जीवनस्य सुन्दरः स्वप्नः मया किमर्थं भज्येत ?"

अहं शिरस्त्राणं धृत्वा गुरुदेवस्य पादपांसुं स्वस्य ललाटे धृत्वा नमस्कृतवती ।

गुरुदेवः जगतः मायया विस्मितः जातः ।

- ३ -

"परन्तु यदि भवान् न अङ्गीकुर्यात् तर्हि तस्याः भिक्षायाः सार्थकता न भवेत्, भिक्षा सम्पूर्णा न भवेत्" इति अवदत् मुकुन्दः ।

चैतन्यः अवदत् - "यदि तेन दत्तं तर्हि मया अपि दत्तमिव !.."

"एवम् !! भवता अपि अङ्गीकृतं किम् ?"

"आं, का भिक्षा ?" - चैतन्यः अपृच्छत् ।

"पतिभिक्षा । भवत्तः इष्यते सा !" इति वदन्ती इन्दिरा चैतन्यस्य पुरतः स्वरूपं दर्शितवती ।

चैतन्यः आकुलीभूतः । उत्थाय पुरोभागे वालुकायाः राशेः पुरतः ज्योत्स्नायां स्थितां व्यक्तिं निर्निमेषदृष्ट्या अपश्यत् सः । एवं वीक्षमाणस्य तस्य मनसि मुकुन्दः दूरं दूरं गत्वा दिगन्ते ऐक्यं प्राप्नोत् । मुकुन्दस्य स्थाने इन्दिरायाः स्मरणं मन्दगत्या आगच्छत् । ज्योत्स्नामय्यां प्रशान्तरात्रौ गङ्गायमुनयोः सङ्गमस्थले तस्मिन्

विशालसैकतोपचये अनन्तस्य सान्त्यम्, अव्यक्तस्य व्यक्तत्वं च यथा दृश्येत तथा इन्दिरा निर्निमेषदृष्ट्या तम् अपश्यत् ।

कालपुरुषः तौ पश्यन्नेव स्वस्य गमनं विस्मृतवान् । नक्षत्राणि तौ एव वीक्षमाणानि आसन् । प्रवहमाने नद्यौ तौ एव अपश्यताम् । चन्द्रोऽपि स्तब्धः । अग्रे किं प्रचलेत् इति ज्ञातुं समस्तं जगत् कातरताम् अदर्शयत् ।

किञ्चित्कालानन्तरम् इन्दिरा एव - "रमेशार्य !" इति आह्वयत् ।

"मुकुन्द ! अहं रमेशः न । चैतन्यः अस्मि ।"

"रमेशार्य ! अहमपि मुकुन्दः न, इन्दिरा अस्मि ! भिक्षार्थम् आगतं मया ! भिक्षा दास्यते इति भवान् वचनं दत्तवान् ।.."

"भिक्षादानविषये अहं बद्धवचनः अस्मि एव । मुकुन्द ! याच्यताम् !"

"आर्य ! भवतः प्रीतिः मयि अस्ति किम् ?" - इन्दिरा अपृच्छत् ।

"आं मुकुन्द ! चैतन्यस्य आप्तमित्रं भवान् ।.."

"आर्य ! भवन्तं मार्गयन्ती अहं श्रान्ता अस्मि ।.. मम कुटुम्बजनाः भवन्तं बलात्कारेण आनेतुं यदा प्रयत्नं कृतवन्तः तदा भवान् तान् अवरुद्धवान् !.."

"चैतन्यस्य सजीवं शरीरं श्मशानं प्रति नयन्तः आसन् ते । भवतु नाम । तादृशं कारितवते मुकुन्दाय चैतन्यस्य अभिनन्दनानि" - चैतन्यः अवदत् ।

"यत् जगत् ऐक्यापेक्षामार्गेण गच्छति तत् रमेशम् अनैक्यमार्गेण न नयेत् । गङ्गायमुनयोः सङ्गमस्थलम् इन्दिरारमेशयोः सङ्गमस्थलं भवेत् !"

"सज्जः अस्मि । मम मरणभीतिः नास्ति । यदि मुकुन्दः इच्छेत् तर्हि चैतन्यः तेन सह नद्यां कूर्दितुं भीतिं न प्राप्नुयात् ।"

“आर्य ! विपरीतबुद्धिः किमर्थम् ? नद्यां कूर्दनं मम चिन्तनं न ।...”

“एवम् ! तर्हि एतत् किम् ? चैतन्यः अद्यपर्यन्तं मुकुन्दम् अन्यं न परिगणितवान् । इतः परम् अपि तथा न भावयेयम्” - चैतन्येन उत्तरितम् ।

“अहं भवतः धर्मपत्नी !!”

“भवान् मम आप्तमित्रम् !”

“इन्दिरायां भवतः प्रीतिः नास्ति किम् ?”

“नहि ! मुकुन्दे एव मम प्रीतिः ।”

“आर्य ! गुरोः आज्ञाम् आशिषं च प्राप्य आगतवती अस्मि अहम् ।...”

“किं गुरुदेवः एतं प्रस्तावम् अङ्गीकृतवान् !!!”

“आम् ! सः महात्मा अस्ति ! अधुना भवान् न अङ्गीकरोति चेत् गङ्गायमुनयोः सङ्गमः एव मम शरणम्” - इन्दिरा अवदत् ।

“ममापि सः एव गतिः !”

“पश्यतु आर्य ! कियती रमणीया अस्ति इयं ज्योत्स्ना !”- इन्दिरा अवदत् ।

“आं मुकुन्द ! अत्यन्तप्रशान्ता रमणीया च एषा ।...”

“अहम् अबला !” - इन्दिरा अवदत् ।

“मुकुन्दः एवं वदति यत् तत् उचितं न स्यात् ।”

"आर्य ! हतभाग्याम् एतां मां भवान् उद्धरेत् ! मुरुभूमिः इव स्थितं मम जीवनम् उद्यानं भवेत् । मां मा तिरस्करोतु भवान् । अहं भवतः धर्मपत्नी । भवति यत् वीरत्वं स्यात् तत् मयि नास्ति । अहम् अबला । मां रक्षतु भवान् ! रक्षतु !" इत्येवं वदन्ती सा चैतन्यस्य पादौ गृहीतवती । अश्रुधारां पातयन्ती उच्चैः अरोदीत् सा ।

चैतन्यः उरसि हस्तौ बद्ध्वा शून्यदृष्ट्या विशालं गगनं विलोकमानः आलोचनातत्परः जातः । तस्य मनसि इन्दिरां विना सर्वं विश्वं विलयं गतम् ! चन्द्रः, नक्षत्रं, गगनं, नदी, वनम् इत्यादिकं सर्वम् अपि स्वप्नदृष्टम् इव विलीयते स्म । तस्य मनसि अन्धकारः प्रसृतः । मनः स्वयमेव - "गुरुदेव ! गुरुदेव !" इति उच्चैः आकारयत् ।

तावता - "चैतन्य ! किम् ?" इति कोऽपि पृष्टवान् इति अभात् !

चैतन्यः परावृत्य दृष्टवान् । आजानुबाहुः प्रेमानन्दस्वामी वालुकाराशेः मध्ये मूर्तिवन्महिमा इव स्थितवान् आसीत् ।

"किं चैतन्य ?" इति वदन् गुरुदेवः लता इव चैतन्यस्य पादतले पतितवतीं निरावलम्बिनीम् इन्दिरां, झञ्झवातेन अपि प्रहर्तुम् अशक्यः इव निष्कम्पः महीरुहः इव स्थितवन्तं चैतन्यं च अपश्यत् !

चैतन्यः गुरुं नमस्कृत्य शोकमिश्रितध्वनिना अवदत् - "गुरुदेव !" इति ।

गुरुदेवेन उक्तम् - "चैतन्य ! एषा एव सृष्टेः समस्या !! एकः मुक्तः, अन्यः मुमुक्षुः बद्धः । कश्चित् व्यक्तः, कश्चित् अव्यक्तः !! एषा एव माया ! एषा एव भगवतः लीला !.."

"गुरुदेव ! अग्रे किं करवाणि ?"

"भवान् स्वतन्त्रः ! मम अनुज्ञा अस्ति । आशीर्वादोऽपि अस्ति । यथोचितं निर्णीयताम् । भवान् निश्चयेन नष्टः न भविष्यति । यदि भवान् एतां न अभ्युपगच्छेत् तर्हि एतस्याः जन्म सार्थकतां न गच्छेत् इत्येतावत् तु स्मर" इत्येवम् उपदिश्य गुरुदेवः अपागच्छत् ।

गुरुदेववाचम् अनुसृत्य चैतन्यः अधः पतिताम् इन्दिरां दृष्टवान् । मृदुतया तां गृहीत्वा - "इन्दिरे ! उत्तिष्ठ ! भवत्याः रमेशः अहम् उपस्थितः अस्मि" इति अवदत् ।

गङ्गायमुनयोः प्रवाहः आरब्धः । चन्द्रः इतोऽपि द्विगुणितकान्त्या सञ्चारम् आरब्धवान् । नक्षत्राणि ससन्तोषं द्योतमानानि अभवन् । कौमुद्याः सान्द्रता अवर्धत । सृष्टिचक्रं यथावत् कार्यरतम् अभवत् !!

साश्रुनयना इन्दिरा रमेशं दृढम् आलिङ्ग्य - "अधुना भवान् निश्चयेन संन्यासी एव !" इति अवदत् ।

## बालमोदिनी - १

# परिवर्तनम्

(सं) दयाकर दाब्के

कश्चन राजा । वृद्धस्य तस्य केशाः पलिताः । एकदा सः प्रासादे एकम् उत्सवम् आयोजितवान् । तदर्थं सः बहून् नृपान् निमन्त्रितवान् । वनस्थः तदीयः गुरुः अपि तद्दिने उपस्थितः । कार्यक्रमान्ते नर्तक्याः नृत्यं प्राचलत् ।



सर्वे नृत्यदर्शने लीनाः अभवन् । प्रभातसमयः आसन्नः । वाद्यवादकः निद्रां प्राप्नुवन् अस्ति इत्येतत् नर्तक्या लक्षितम् । भीता सा तं सावधानं कर्तुम् एकं श्लोकम् अगायत् - 'अतीतो बहुकालो रे किञ्चिदेवावशिष्यते । क्षणमात्रस्य दोषेण मा भव त्वं कलङ्कितः' इति ।

अस्य श्लोकस्य अर्थं विभिन्नाः जनाः विभिन्नप्रकारेण स्वीकृतवन्तः । वाद्यवादकः तन्द्रां त्यक्त्वा सम्यक् अवादयत् । गुरुः नर्तकीं कृतज्ञतापूर्वकं नमस्कृतवान् । राजकुमारी स्वस्य अमूल्यं स्वर्णहारं नर्तक्यै दत्तवती । राजपुत्रः स्वमुकुटं नर्तक्यै समर्पितवान् ।

सर्वम् एतत् दृष्ट्वा आश्चर्यान्वितः राजा नर्तकीम् अवदत् - "सामान्या नर्तकी त्वम् एकेन एव श्लोकेन सर्वेभ्यः बहुधनं प्राप्नोत् ।"

तद् श्रुत्वा गुरोः नेत्रे अश्रुपूर्णे जाते । सः राजानम् अवदत् - "एतां सामान्यां मा वद । अधुना एषा मम गुरुः । इतः मम नेत्रे उद्घाटिते । मम सर्वं जीवनं वने देवपूजनेन व्यतीतम् । अन्तकाले आसन्ने, एतस्याः नृत्यं दृष्ट्वा अहं साधनानाशने मतिं कृतवान् आसम् । अधुना अहं पुनः वनं गच्छामि ।"

राजकन्या अवदत् - "तात, विवाह-योग्यायाः मम विवाहस्य विषये भवता न चिन्तितम् एव । अतः गजपालकेन सह पलायनाय अहं मनः कृतवती आसम् । किन्तु अस्याः श्लोकतः मयि सुमतिः जागरिता" इति ।

युवराजः अवदत् - "महाराज, वृद्धस्य अपि भवतः मनसि वानप्रस्थचिन्तनं मया न लक्षितम् । अतः अहं सेनापतेः साहाय्येन भवतः प्राणहरणाय, राजत्वप्राप्तये च योजनां रचितवान् आसम् । सः श्लोकः असूचयत् - 'शान्तो भव, तूष्णीं तिष्ठ । पितुः निधनात् परं भवान् एव राजा भविष्यति । किमर्थं पितृहननपातकम् आचरसि' इति । अतः मम मनसः परिवर्तनं जातम् ।"

एतस्य सर्वस्य श्रवणात् राज्ञः अपि मनसः परिवर्तनं जातम् । तेन आत्मज्ञानं प्राप्तम् । वैराग्यं तस्मिन् जागरितम् । सः सम्यक् विचार्य राजपुत्राय राज्यम् अयच्छत् । स्वपुत्रीं च अवदत् - "अस्यां सभायां बहवः राजकुमाराः सन्ति । एतेषु योग्यं कमपि चिनु इति । तव विवाहं निर्वर्तयिष्यामि ।" इति राजपुत्री कञ्चित् राजकुमारम् अचिनोत् । तस्याः विवाहं निर्वर्त्य राजा सिंहासनं त्यक्त्वा वनम् अगच्छत् ।

नर्तकी अचिन्तयत् - 'मम श्लोकं श्रुत्वा अन्येषु परिवर्तनम् अभवत् । कथं मयि न भवेत् ?'

तस्याम् अपि वैराग्यम् उद्बुद्धम् । सा निश्चितवती - 'अद्य आरभ्य अहं नर्तनं त्यक्त्वा प्रभु-स्मरणेन जीवनयापनं करिष्यामि' इति ।

## बालमोदिनी - २

# प्रकाशः अन्धकारं प्रति गच्छेत्

प्रकाशरावः



कदाचित् कृष्णः क्वापि प्रस्थानाय सज्जः भवितुम् इच्छन् दर्पणस्य पुरतः स्थित्वा विविधैः सुन्दरैः आभरणैः आत्मानम् अलङ्कुर्वन् आसीत् । कृष्णस्य व्यवहारे एतादृशम् आचरणं न दृष्टम् आसीत् इतः पूर्वं कदाचिदपि । अतः आश्चर्यम् अनुभवन् तदीयः सारथिः दारुकः तम् अपृच्छत् - "आर्य ! अद्य कुत्र गम्यते भवता ? किमर्थम् एवं बाह्यालङ्कारे विशेषास्था दर्श्यते अद्य ? भवान् तु कदापि एवं बाह्यालङ्कारे आस्थां न दर्शितवान् इतः पूर्वम् ।.."

"यदा यादृशी आवश्यकता आपतेत् तदा तादृशम् आचरणं करणीयं भवति ।..." - कृष्णः मन्दहासं प्रकटयन् किरीटादिधारणे मग्नः सन् एव अवदत् ।

"इदानीं तादृशी आवश्यकता का आ-पतिता ? अद्य कं द्रष्टुं गम्यते भवता ?" - दारुकः अपृच्छत् ।

"अद्य दुर्योधनं द्रष्टुं गच्छामि ।.."

"दुर्योधनदर्शनस्य, अस्य अलङ्कारस्य च कः सम्बन्धः ?"

"ये मम अन्तरङ्गवैशिष्ट्यं पश्यन्ति तेषां पुरतः अहं सरलवेषेण एव तिष्ठामि । दुर्योधनः तु न तादृशः । बाह्याडम्बरदर्शने तस्य विशेषासक्तिः । अतः तं प्रभावयितुम् अयं वेषः ।..."

"दुर्योधने प्रभावं जनयितुं यदि इष्येत तर्हि सः एव अत्र आनाय्यताम् । किमर्थं भवता स्वयं गम्येत तत्र ?" - दारुकः पुनः अपृच्छत् ।

"भोः, अन्धकारः प्रकाशदिशि न आगच्छति । प्रकाशः एव स्वयम् अन्धकारदिशि गच्छेत् । प्रकाशस्य धर्मः एषः" इति हसन् अवदत् कृष्णः ।

## बालमोदिनी - ३

# वृक्षस्य चक्रवर्तित्वम्

* (सं) वेङ्कटरेड्डि बि, पालमूरु

कश्चन गुरुः शिष्येण सह गच्छन् आसीत् । मार्गे गुरुः कस्यचित् वृक्षस्य अधः स्थित्वा 'तथास्तु' इति अवदत् ।



गुरुणा तथा किमर्थम् उक्तम् इति अजानन् शिष्यः गुरुम् एतस्य कारणम् अपृच्छत् ।

तदा गुरुः अवदत् - "सः महावृक्षः स्वस्य मनोवृत्तिम् अन्यं महावृक्षं प्रति यत् अवदत् तत् मया श्रुतम् । अतः 'तथास्तु' इति उक्तम्" इति ।

"तस्य महावृक्षस्य का मनोवृत्तिः ?" - शिष्यः अपृच्छत् ।

"सः महावृक्षः चिन्तयति यत् चक्रवर्ती भूत्वा भूमण्डलं परिपालनीयम् इति ।"

तदा शिष्यः हसन् अपृच्छत् - "गुरुवर्य ! असम्भवम् एतत् । अत्याशा ननु तस्य ? तस्य अर्हता अस्ति किं चक्रवर्तित्वं प्राप्तुम् ?"

"अर्हता कुतः न स्यात् पुत्र ! आजीवनं प्रतिफलापेक्षां विना फलानि ददाति सः । आश्रयं दत्त्वा सर्वान् प्राणिनः रक्षति अपि । एतत्सर्वं पुण्यजनकम् एव ननु ?"

"तत् तु सत्यम् । किन्तु वृक्षः कथं चक्रवर्ती भवितुम् अर्हति ?"

"भगवतः सङ्कल्पः यदि स्यात् तर्हि लोके असाध्यं किं वा स्यात् ?"

तस्यां रात्रौ महती वृष्टिः अभवत् । सः वृक्षः वायुना भूमौ पातितः । शिष्यः तत् दृष्ट्वा हसन् तं प्रसङ्गं विस्मृतवान् ।

केचन मासाः अतीताः । एकस्मिन् दिने शिष्यः धावन् गुरुम् अवदत् - "गुरुवर्य ! ज्ञातं किं भवता ? भरतः श्रीरामचन्द्रस्य पादुकयोः पट्टाभिषेकं कृतवान् इति श्रूयते । इतः परं चतुर्दश वर्षाणि पादुके एव समग्रं साम्राज्यं पालयिष्यतः ।"

तदा गुरुः समन्दहासम् अवदत् - "वृक्षः चक्रवर्ती कथं भविष्यति इति मां पृष्टवान् आसीः ननु त्वम् ! इदानीं पश्य, तत् सम्पन्नम् एव !"

"कथम् एतत् समभवत् गुरुवर्य !"

"वत्स ! महावृक्षस्य काष्ठेन एव तक्षकः पादुके निर्माय रामाय दत्तवान् आसीत् । सहस्राधिकानां वर्षाणां पुण्यफलेन तपःफलेन च वृक्षः पादुके भूत्वा रामचन्द्रस्य समीपं

गतः । रामः भरताय ते पादुके दत्तवान् । भरतः तयोः पादुकयोः पट्टाभिषेकं कृतवान् । एवं चक्रवर्तित्वं प्राप्तव्यम् इति वृक्षस्य इच्छा पूरिता जाता ।"

## भाषापाकः – ३२६

माणवकः

## साधयामि / साधयामः

शिष्यः - श्रीमन् ! गृहादिभ्यः निर्गमनसमये बन्धुमित्रादयः वदन्ति - 'साधयामि' इति, 'साधयामस्तावत्' इति वा । एतस्य आशयः कः ?

आचार्यः - भवता कः आशयः गृहीतः ?

शि - एतावता अपि यत् प्रयाणं न सिद्धं, तत् साधयितुम् इष्यते इति आशयः स्यात् इति चिन्तितं मया ।

आ - अत्र धातुः कः ?

शि - 'षिधु संराद्धौ' इति धातुः । चतुर्थगणीयः सः । तस्य ण्यन्तं रूपं - 'साधयति' इति ।

आ - एतदतिरिच्य षिधधातुद्वयम् अपि अस्ति । षिध गत्याम् इति भ्वादिः । षिधू माङ्गल्ये च इति अपरः । सोऽपि भ्वादिरेव । उभयोः अपि ण्यन्तं रूपं 'सेधयति' इति । अतः 'साधयति' इत्यत्र तयोः न उपादानम् ।

शि - विस्तरेण अजानन् अपि अहं यत् उक्तवान् तत् तु युक्तम् एव जातम् ।

आ - आम् । घुणाक्षरन्यायेन कानिचन वचनानि अवितथानि भवन्ति । किन्तु 'साधयामि' इत्यस्य आशयः यः भवता ऊहितः स च न शिष्टजुष्टः ।...

शि - शिष्टैः कः अर्थः उक्तः ?

आ - गत्यर्थकता उक्ता । तथा हि कालिदासप्रयोगः - 'साधयाम्यहमविघ्नमस्तु ते..' इति (रघु.११.९१) । तत्र मल्लिनाथः वदति - 'साधयामि = गच्छामि' इति ।

शि - तात्पर्यार्थकथनं स्यात् तत् ।...

आ - न तथा । धातोः वाच्यार्थः एव सः । तत्रैव टिप्पण्यां लिख्यते - 'धातूनाम् अनेकार्थत्वात्' इति । तत्र क्षीरतरङ्गिणीश्लोकः अपि उद्ध्रियते - 'क्रियावाचित्वमाख्यातुम् एकोऽत्रार्थः प्रदर्शितः । प्रयोगतोऽनुमन्तव्याः अनेकार्था हि धातवः' इति ।

शि - गत्यर्थके 'षिध'धातौ सति अपि सः त्यज्यते - 'साधयति' इति रूपस्य अप्राप्तिकारणतः । संराध्यर्थकस्य रूपं तु अनुकूलं, किन्तु अर्थः कष्टेन सङ्गमनीयः ।

आ - अस्यापि णिचि 'सेधयति' इति रूपम् अपि अस्ति । 'सिद्ध्यतेरपारलौकिकेऽर्थे' इति णौ आत्वम् । पारलौकिके अर्थे तु न आत्वम् । 'तपः सेधयति' इत्यादीनि उदाहरणानि ।

शि - 'साधयामि'प्रभृतीनां प्रयोगः बहुधा दृश्येरन् एव ननु ?

आ - आम् । केचन यथा -

- आश्चर्यराघवे - वामदेवः - भगवन् कौशिक ! साधय । शिवाः सन्तु पन्थानः वत्सयोः रामलक्ष्मणयोः ।

[तट्टीकायां लिख्यते - साधय = गच्छ । गच्छेति पदं परित्यज्य साधय इत्युक्तं तत्परुषवादितां परिहर्तुम् ।]

- नैषधे - अयि साधय साधयेऽप्सितं स्मरणीयाः समये वयं वयः ।

- पद्मपुराणे - भो भोः सखे साधय गच्छ शीघ्रं मायामयं नन्दनरूपयुक्तम् । - (२.७५.२२)

- महाभारते - द्वैपायनवचः श्रुत्वा शिनेर्नप्ता कृताञ्जलिः । ततो मामब्रवीत् मुक्त्वा स्वस्ति सञ्जय साधय ॥ - (९.२९.२१)

- हरिवंशपुराणे - साधयामि महाबाहो भवतः कार्यसिद्धये । - (२.४०.४६)

- विक्रमाङ्कदेवचरिते - तत् एषः (अहम्) दक्षिणाम्बुधिसम्मुखः सन् इतः साधयामि ।

- अभिज्ञानशाकुन्तले - वैखानसः - साधयामस्तावत् (इति निष्क्रान्तः)

## लेखः

# तीर्थरूपाः तीर्थयात्रिणः

* रविरत्नाकरमराठे, बेङ्गलूरु,

Email - drivewithmarathe@gmail.com

[अत्र यत् विवृतं तत् न हि रविवर्येण लिखितम् । यतः सः संस्कृतं न जानाति । तस्य परिचयः अपि आकस्मिकतया एव जातः । कदाचित् ग्रामात् बेङ्गलूरुं प्रति आगमनाय मया ‘ब्लाब्लाकार्’ इत्येषा व्यवस्था आश्रिता । तदवसरे अहं रविवर्यस्य यानस्य सहयात्रिकः अभवम् । रविवर्यः यानं चालयन् एव स्वयात्रावृत्तं विस्तरेण श्रावितवान् । यात्रा एषा प्रेरणादायिनी इत्यतः तदेव वृत्तम् इह यथावत् उपस्थाप्यते । - वृत्तसङ्ग्राहकः]




पुण्यक्षेत्राणां सन्दर्शनं वार्धक्ये एव करणीयम् इति बहूनाम् अभिप्रायः । परन्तु यदा शरीरे शक्तिः भवति तदा एव तीर्थयात्रा करणीया इति मम मतम् । बहवः युवानः कार्यालये विरामं स्वीकृत्य वैदेशिकानि विलासस्थानानि गच्छन्ति । कदाचित् मम मनसि चिन्तनम् आगतम् - 'अस्मद्देशे बहूनि तीर्थक्षेत्राणि सन्ति । तत्र गमनम् इह जन्मनि सकृद्वा करणीयम् एव । अतः कार्यात् विरामं स्वीकृत्य भारतस्य तीर्थक्षेत्राणाम् अटनं करिष्यामि' इति । द्वादशानां ज्योतिर्लिङ्गानां, शङ्कराचार्यमतेन चतुर्धाम इति ख्यातानां द्वारका-बदरीनाथ-पुरी-रामेश्वराणां च दर्शनार्थं यात्रा करणीया इति निश्चयः मया कृतः । मम एतं निश्चयम् अहं पत्नीमपि श्रावितवान् । सा ससन्तोषं मम प्रस्तावम् अङ्गीकृतवती । कार्यालयीयैः मित्रैः सह यदा अहम् एतं विषयं संविभक्तवान् तदा ते माम् उपहसितवन्तः - 'यौवने विलासस्थानानि गत्वा विहारः करणीयः । वार्धक्ये एव एतादृशी यात्रा करणीया' इति । परन्तु मम निर्धारः दृढः आसीत् । स्वकीयेन चतुश्चक्रिकायानेन कर्णाटकतः प्रस्थाय पञ्चविंशत्यां दिवसेषु द्वादशज्योतिर्लिङ्गानां तत्समीपवर्तिनां केषाञ्चन इतरेषां पुण्यक्षेत्राणां च दर्शनं समाप्य प्रत्यागन्तव्यम् इति अहं निर्णीतवान् । अहं पत्नी च प्रस्थानसज्जताम् आरब्धवन्तौ ।

चतुश्चक्रिकायां गमनम् इति हेतोः यानस्य अलङ्कारः अपि किञ्चिन्मात्रेण करणीयः इति चिन्तितम् । यानस्य सर्वेषु भागेषु पुण्यक्षेत्राणां चित्राणि, ज्योतिर्लिङ्गयात्रा इति फलकं च लिप्तम् । समग्रे भारदेशे अटनसमये मूर्च्छारोगस्य विषये जागरां प्रतिपादयाव इति कृत्वा तद्विषयकाणि अपि स्फोरकपत्राणि याने लिप्तानि । कस्यचन वैद्यस्य साहाय्येन मूर्च्छारोगविषये बहुविधविवरणं सङ्गृहीतम् । आवश्यकवस्तूनि याने स्थापयित्वा कर्णाटकात् आवाभ्यां प्रस्थितम् ।

अस्मिन् प्रवासे अनेके अनुभवाः अभवन् । तेषु केचन सुखकराः, केचन दुःखदायकाः च । किञ्च तीर्थाटनविषये भारतीयानां मनस्सु कीदृशी श्रद्धा भवति इत्येषः अंशः मम



मनसि गाढम् अवतीर्णः । तीर्थाटनसमये जाताः केचन विशिष्टाः अनुभवाः अत्र कारणम् ।

महाराष्ट्र-मध्यप्रदेशयोः सीमाप्रदेशे याने इन्धनं पूरणीयम् इति सङ्कल्प्य अहं किञ्चन इन्धनागारं प्रविष्टवान् । मम याने लिप्तानि चित्राणि दृष्ट्वा तत्रत्यः कश्चन कर्मकरः मम समीपम् आगतः । मम यात्रायाः समग्रं विवरणं श्रुत्वा सः आश्चर्यान्वितः अभवत् । सः माम् उद्दिश्य - "अहं भवतः यानस्य क्षालनं कृत्वा दास्यामि । तदर्थं धनं किमपि न स्वीक्रियते मया । भवतः तीर्थाटने मम काचित् सेवा इयम्" इति उक्त्वा कुञ्चिकां स्वीकृत्य यानं क्षालनस्थानं नीतवान् । क्षालनानन्तरम् अहमेव प्रीत्या तस्मै धनं दातुम् उद्युक्तः । सः निराकरणं कृतवान् चेदपि कथञ्चित् बलाद् अहमेव तस्य कोषे धनं स्थापितवान् । ततः कुतूहलेन - 'भवतः नाम किम् ?' इति अपृच्छम् । 'मम नाम नौषादः' इति अवदत् सः । "तीर्थक्षेत्रेषु अहं भेदं न परिगणयामि । एतादृशं पुण्यकार्यं कुर्वन् भवान् निश्चयेन अस्ति स्तुत्यर्हः" इति वदन् सः माम् आपृष्टवान् ।

अस्माकं यानं गुर्जरप्रदेशे गच्छत् आसीत् । पृष्ठतः अपरं यानम् अनुसरति स्म । दर्पणे यदा तत् यानं दृष्टं तदा तस्मिन् याने उपविष्टाः दृढकायाः चत्वारः पुरुषाः लक्षिताः । ते सर्वे अपि कृष्णवर्णीयम् उपनेत्रं धृतवन्तः आसन् । तेषां दर्शनं भीतिजनकम् आसीत् । मया यानवेगः वर्धितः । तथापि ते मम यानम् अतिक्रम्य अग्रे गत्वा यानं स्थगितवन्तः । भीतः अहं मम पत्नीम् उक्तवान् - "अहं बहिः गत्वा तैः सह सम्भाषणं करिष्यामि । भवत्या यानद्वाराणि कीलयित्वा उपवेष्टव्यम् । यत्किमपि भविष्यति चेदपि मम सूचनां विना द्वारं न उद्घाटनीयम् । भवत्याः रक्षणं मम उत्तरदायित्वम्" इति ।

यानात् बहिः अवतीर्णं मां ते चत्वारः अपि क्रमशः आलिङ्गितवन्तः । मम यात्राविषयं श्रुत्वा मम पादयोः पतितवन्तः च । "भवन्तौ सुदूरात् आगत्य तीर्थक्षेत्राणि अटन्तौ स्तः । अस्मत्प्रदेशे आगतवद्भ्यां पुण्यदम्पतिभ्यां भवद्भ्यां भोजनम् अस्माभिः दातव्यम् ।

अधुना भोजनसमयः । गुर्जरस्य विशिष्टभोजनम् अस्माभिः व्यवस्थाप्यते । तद् भुक्त्वा एव भवद्भ्याम् अग्रे गन्तव्यम्" इति तैः अनुरोधः कृतः ।

तेषां व्यवहारे कृत्रिमता मया नानुभूता । तैः निर्दिष्टे स्थले आवां भोजनं कृतवन्तौ । अन्ततो गत्वा - "अस्माकं ग्रामं प्रति अपि भवतोः पादस्पर्शः स्यात् । कृपया आगच्छताम्" इति सानुरोधम् आह्वानं तैः कृतम् । अहं मम यात्राविवरणम् उक्त्वा - 'समयाभावात् आगन्तुं न शक्यते' इति तान् बोधयित्वा तैः आपृष्टः ।

केदारनाथपर्वतस्य सानुप्रदेशे गौरीकुण्डे कश्चन गुर्जरजनानां गणः लब्धः । सः गणः आवयोः यात्राविषयं ज्ञात्वा अत्यन्तं सन्तुष्टः । "वयमपि यात्रायां निरताः । परन्तु अस्माकं तु यात्रा न दीर्घा । इतः बदरीनाथं गच्छन्तः स्मः । भवतामपि अग्रिमयात्रास्थानं बदरीनाथः एव । तस्मात् बदरीनाथे अस्माकम् आतिथ्यं भवद्भिः स्वीकरणीयम् । तत्र आवासभोजनादिव्यवस्था अस्माभिः करिष्यते" इति तैः प्रतिश्रुतम् । तेषां यानस्य पृष्ठतः गच्छन्तौ आवां बदरीनाथं प्राप्तवन्तौ । तत्र कस्मिंश्चित् वैभवोपेते वसतिगृहे तैः आवयोः वासव्यवस्था परिकल्पिता आसीत् ।




आवयोः समग्रस्य यात्राव्ययस्य पादभागः यन्निमित्तं व्ययीकरणीयः अभविष्यत् तस्याः यात्रायाः विषये श्रद्धाकारणतः एव तैः एतावती व्यवस्था कृता आसीत् । तदनन्तरं मया ज्ञातं यत् तेषां प्रदेशे सः परिवारः अत्यन्तं प्रसिद्धः, तेषां मेलनाय जनाः घण्टाः यावत् प्रतीक्षन्ते इति ।

कोणार्कमन्दिरात् अग्रे विंशतिकिलोमीटर्दूरे मम प्रयाणं चलति स्म । स च सायङ्कालः । हठात् मम यानं स्थगितम् अभवत् । निरन्तरप्रवासकारणतः यानस्य शुष्ककोषे समस्या जाता । अन्यस्य शुष्ककोषस्य साहाय्येन यानस्य शुष्ककोषस्य पुनश्चेतनं शक्यम् । अपरिचिते स्थले को वा मम साहाय्यं कुर्यात् ? अनतिदूरे किञ्चन मन्दिरमिव दृश्यते

स्म । तद् आसीत् श्रीस्वामिनारायणमन्दिरम् । तत्रत्याय मुख्याय मया सर्वः वृत्तान्तः निवेदितः ।

"इदानीं सायङ्कालः जातः । भवतोः वासः मम मन्दिरे एव भवतु । यानादिविषये अहम् अज्ञः । स्वयमेव भवता तद्विषये चिन्तनीयम्" इति अवोचत् सः मुख्यः । मां मम पत्नीं च मन्दिरस्य अतिथिगृहे अवासयत् सः । तच्च अतिथिभवनं वैभवोपेतम् आसीत् । मया मम इन्शूरेन्स्संस्थायै दूरवाणी कृता । यानं यत्र क्वचित् तिष्ठति चेदपि ४० किलोमीटर्-परिमिते दूरे विद्यमानं यानसमीकरणस्थानं नेष्यामः इति इन्शूरेन्स्जनाः प्रतिश्रुतवन्तः आसन् । तदर्थं मया प्रतिवर्षं सुमहत् धनं इन्शूरेन्स्संस्थायै दीयते स्म । परन्तु ते असम्बद्धव्याजान् उक्त्वा - 'साहाय्यं कर्तुं न शक्यते' इति उक्तवन्तः । बेङ्गलूरुजनः कश्चित् उक्तवान् (दूरवाण्या) - "भवतः याने पूर्णम् इन्धनं भवति चेत् कदाचित् समस्या निवारिता स्यात्" इति ।

"कृपया इन्धनार्थं पात्रं व्यवस्थाप्यताम्" इति मन्दिरस्य मुख्यम् अहं पृष्टवान् । सः केनचित् बालकेन सह मां प्रेषितवान् । बालकः मां स्वगृहं नीतवान् । भाग्यवशात् तस्य अग्रजः एव यानसमीकरणापणस्य स्वामी आसीत् । मम यात्रावृत्तान्तं श्रुत्वा सन्तुष्टः सः स्वकीयकार्याणि त्यक्त्वा मया सह आगत्य मम यानं समीकृतवान् । यदा अहं यानविषये चिन्तयन् आसं तदा मम पत्नी मन्दिरे सत्सङ्गे उपविष्टवती आसीत् । पत्न्याः मुखतः यात्रावृत्तान्तं श्रुतवन्तः तत्रत्याः जनाः सर्वे अपि पङ्क्तिशः आगत्य तां नमस्कृतवन्तः । स च प्रसङ्गः मम अत्यन्तं सङ्कोचास्पदम् अभवत् इति पत्नी माम् उक्तवती ।

यात्रामार्गे द्वे लघुबालिके सेवफलस्य विक्रयणं कुर्वत्यौ आस्ताम् । अहं सेवफलानि क्रेतुम् उद्युक्तः । यावत् अहं सेवफलानि क्रीतवान् तावता तयोः पितामही तत्र आगता । मम यानस्थानि चित्राणि दृष्ट्वा सा यात्राविषये माम् अपृच्छत् । मया क्रीतानि फलानि तु पक्वानि आसन् । 'दिनद्वयाभ्यन्तरे तानि समापनीयानि' इति सूचितवती सा । ततः - 'भवतोः यात्रायां ममापि योगदानं भवतु' इति उक्त्वा - 'अनतिदूरे विद्यमानात् वृक्षात् अपक्वानि, अल्पपक्वानि, अर्धपक्वानि च कानिचन फलानि आनीयताम्' इति पौत्र्यौ सा सूचितवती । तत्कारणतः अग्रिमेषु उपदशेषु दिनेषु आवाभ्याम् आतृप्ति सेवफलानि भुक्तानि ।

आवयोः तीर्थयात्रा समाप्तप्राया आसीत् । रामेश्वरस्य दर्शनार्थं गच्छन्तौ आस्व । गमनमार्गे यानस्य पुनः समस्या अभवत् । स च राजमार्गः आसीत् इति कारणतः अहं सर्वकारस्य साहाय्यवाण्यैदूरवाणीं कृतवान् । आश्चर्यं नाम अनुक्षणं ततः प्रतिस्पन्दः आगतः । यानसमस्यां वारयितुं पञ्चषाः जनाः अर्धघण्टाभ्यन्तरे उपस्थिताः । "मम

यानस्य शुष्ककोषः नष्टः । भवतः यानस्य शुष्ककोषस्य साहाय्येन तत्र किञ्चित् ऊर्जा पूर्यताम्" इति अहं तम् उक्तवान् । "मम तथाकरणे अनुमतिः नास्ति" इति सः उक्तवान् । मम यात्रायाः कथां श्रुत्वा सः ज्येष्ठम् अधिकारिणं विषयं विवृत्य कथञ्चित् तस्य अङ्गीकारं प्राप्तवान् । ततः विना बाधम् आवां रामेश्वरं गत्वा प्रत्यागतवन्तौ ।

एवं तीर्थयात्रावसरे बहुविधाः विशिष्टाः अनुभवाः प्राप्ताः । समग्रे देशे तीर्थयात्राविषये जनानाम् आदरः कथं वर्तते इति इतः ज्ञातम् । मूर्च्छारोगस्य विषये अपि द्वित्रस्थलेषु बोधितम् । एवं यात्रावसरे पुण्यकार्यम् अपि कृतम् । तीर्थयात्रिणां पादयोः वन्दनेन अस्माकमपि पुण्यलेशः लभ्यते इति बहवः आवयोः पादस्पर्शं कृतवन्तः । यात्राद्योतकं युतकम् अपि सर्वदा धरावः स्म इति हेतोः समग्र देशे आवां महता गौरवेण पश्यन्ति स्म जनाः । एतत्सर्वं दृष्ट्वा सङ्कोचवशात् - 'मया यानस्योपरि चित्राणि लिप्त्वा, यात्राद्योतकं युतकं धृत्वा च दोषः कृतः' इति भासते स्म । किञ्च एतेन कारणेन एव यात्राविषयिणी श्रद्धा समाजे कथम् अस्ति इति अहं ज्ञातुं शक्तवान् । जनाः यात्रास्थानानि गत्वा महोन्नतं सन्तोषम् अनुभवन्ति । तादृशमेव सन्तोषं यात्रिणः दृष्ट्वा अपि अनुभवन्ति इति तु विशेषः एव ।

## धारावाहिनी - सत्यगवेषणम्

### १८. समाप्तं सत्यस्य गवेषणम्,

(अन्तिमः भागः)



गते मासे ..[ बादलमहाराजनाम्ना ख्यातेन पित्रा श्रीनिवासेन मिलित्वा तदीयं वृत्तान्तं समग्रतया ज्ञात्वा हैदराबादं प्रत्यागता दमयन्ती नितरां सन्तुष्टा । द्वित्राणि वर्षाणि अतीतानि । कदाचित् वेङ्कटेशेन सह सा मुम्बयीं प्रति प्रस्थितवती । तदवसरे सरस्वती तां दूरवाण्या असूचयत् यत् कस्यचित् दूरवाणी आगता आसीत् इति । यावत् दमयन्ती वसतिगृहं प्राप्नोत् तावता दिनेशस्य पितामहः पुनः दूरवाणीम् अकरोत् । ततः दमयन्त्या ज्ञातं यत् पिता अस्वस्थः सन् चिकित्सालयं प्रवेशितः इति । दिग्भ्रान्ता सा उत्तरकाशीं प्रति प्रस्थितवती ।].. तदनन्तरम्

तत्र चिकित्सकः डा.बद्रीनाथशुक्लः तस्यै तद्दिनस्य सूचनाः अददात् । बादलमहाराजः अधुना अपि विसंज्ञः एव आसीत् । तत्र चिकित्सकः कार्यव्यापृतः आसीत् । तदर्थं दमयन्ती तस्य वासगृहे एव तेन अमिलत् ।

“भद्रे ! अस्य महाराजस्य मस्तिष्काघातः जातः । परन्तु एतद्विषये चिकित्सां कर्तुम् अस्मच्चिकित्सालये सर्वथा यन्त्रादीनाम् अभावः । अस्य मस्तिष्कपरीक्षणं (सि.टि.स्क्यान्) यथाशीघ्रं करणीयम् । वयं तं ससंज्ञं कर्तुं चेष्टमानाः स्मः । यावत् सः सचेतनः न भवेत् तावत् वयं किमपि कर्तुं न शक्नुयाम ।”

“देहरादूनं प्रति एतस्य नयनं वरं भवेत् ननु ?”

“देहरादूने उत्तमचिकित्सा तु प्राप्येत । किन्तु नयने अस्ति एव विपत्सम्भावना । का भवती ?”

“अहम् अस्मि एतस्य दुहिता ।...”

“भवती उत्तरदायित्वं निर्वोढुं सज्जा चेत् वयम् एतम् इतः मोचयितुम् अर्हेम ।”

“अहम् उत्तरदायित्वं स्वीकरिष्यामि । किं भवान् किञ्चित् रोगिनयनवाहनं व्यवस्थापयितुम् अर्हेत् ?”

“अत्र उपकरणसम्पन्नं वाहनं न प्राप्यते । यानि सन्ति तानि देहरादूनं गन्तुं न अर्हन्ति । स्थानिकानां जनानां कृते कानिचित् वाहनानि अस्माभिः रक्षितव्यानि ।...”

“कृपया अस्माकं कृते काचित् व्यवस्था क्रियताम् ।...”

“वयं यथाशक्ति चेष्टामहे ।”

दमयन्ती वनितास्यूतम् उद्घाट्य सम्पुटकं निष्कास्य चिकित्सकाय यच्छन्ती अवदत् - “एतत् मत्पक्षतः दीयमानं क्षुद्रम् उपायनम् । कृपया स्वीक्रियताम् ।”

चिकित्सकः आदौ सङ्कोचं प्राप्नोत् । परन्तु अनन्तरं स्व्यकरोत् । बहुधा प्रयासस्य अनन्तरं कश्चिद् वाहनचालकः द्विगुणं धनं स्वीकृत्य देहरादूनं गन्तुं सज्जः अभवत् ।



दमयन्ती बादलमहाराजं वाहने शाययित्वा प्रस्थितवती । यात्रा अष्टहोरात्मिका आसीत् ।

देहरादूने उत्तमव्यवस्थासम्पन्ने चिकित्सालये श्रीनिवासः प्रवेशितः । चतुर्विंशतिहोराभ्यन्तरे बहुविधानि परीक्षणानि जातानि । मस्तिष्काघातेन श्रीनिवासस्य मस्तिष्के रक्तं क्षरितं सत् घनीभूतम् आसीत् । तस्मात् तस्य लघुपक्षाघातः अभवत् । शस्त्रक्रियया तत् रक्तम् अपाकृतम् । ततः दिनत्रयस्य अनन्तरं श्रीनिवासः संज्ञाम् अलभत । चक्षुः उन्मीलितवता तेन पार्श्वे दमयन्ती दृष्टा ।

"किम् अभूत् मम ? अहं कुत्र अस्मि ?" - श्रीनिवासः अपृच्छत् ।

"भवान् विसंज्ञः अभवत् गुहायाम् । गङ्गोत्र्याः जनाः भवन्तम् उत्तरकाशीम् आनयन् । ततः अहं भवन्तं देहरादूनम् आनयम् । भवान् देहरादूने असर्वकारीयचिकित्सालये अस्ति ।..."

"कस्मात् अवधेः अहम् अत्र अस्मि ?"

"आ सप्ताहात् ।..."

"अहो एतावद्दीर्घकालम् !! .... अहम्..."

"किम् ?"

"न हि । न किमपि" इति अर्धोक्त्या कथनं स्थगितवान् श्रीनिवासः । तेन स्वस्य दृढतायाः सबलायाः च दर्शनाय प्रयासः कृतः ।

अनन्तरं कश्चन चिकित्सकः आगतः । श्रीनिवासं ससंज्ञं दृष्ट्वा तेन किञ्चित् शारीरकपरीक्षणं कृतम् । शय्यायां लम्बमाने विवरणपत्रे किञ्चित् लिखित्वा सः अगच्छत् ।

होराभ्यन्तरे वरिष्ठः चिकित्सकः मण्डलकैः सह आगतः । बादलस्वामी विस्तरेण परीक्षितः तैः । अनन्तरं चिकित्सकः आगत्य दमयन्तीम् अकथयत् - "वरिष्ठचिकित्सकः भवतीं द्रष्टुम् इच्छति" इति ।

"बादलमहाराजस्य अर्धशरीरं पक्षाघातग्रस्तम् । सः दैनन्दिनजीवनं चालयितुं न शक्नोति इदानीम् । मासद्वयं यावत् व्यायामचिकित्सायाः अनन्तरम् एव सः पादौ चालयितुं शक्नुयात् । एतस्याः ऋते नास्ति कापि जटिलता" इति वरिष्ठचिकित्सकः ताम् अवदत् ।

दमयन्त्याः सम्मुखे अधुना समस्या अस्ति यत् इतः परं चिकित्सकीयव्यवस्थायाम् एव स्थातव्यम्, गुहाजीवनम् इतः परं भवितुं न अर्हति इति पिता कथं बोधनीयः इति । 'अहं तु एतं हर्षेण गृहं नेतुम् इच्छामि । परन्तु पिता तत्र सहमतिं दर्शयेत् उत न इति न ज्ञायते' इति चिन्तयन्ती सा स्वामिनः सम्मुखम् आगता ।

"किम् अवदत् चिकित्सकः ?" - बादल-महाराजेन पृष्टम् ।

"भवतः पक्षाघातः जातः । अधुना चलितुं भवान् न शक्नोति । चक्रासन्दः उपयोक्तव्यः भवता । एतदतिरिच्य व्यायामचिकित्सा अपि करणीया भविष्यति । गच्छता कालेन सामान्या शक्तिः प्राप्येत । सरलैः शब्दैः उच्यते मया - भवान् इतः परं गुहायां वासं कर्तुं न शक्ष्यति । अहं भवन्तं गृहं नेतुम् इच्छामि ।..."

क्षणं विचिन्त्य सः अवदत् - "एतस्याम् अवस्थायाम् अहं परिचर्यायाः ऋते स्थातुं न शक्नोमि । अतः तव आमन्त्रणस्य अङ्गीकारात् ऋते न अन्यः मार्गः मम । अस्तु नाम । यथा त्वं वदसि तथा अहं त्वया सह आगमिष्यामि ।..."

"अहो, मम महती चिन्ता निवारिता जाता । अहम् अचिरात् एव गमनाय व्यवस्थां करोमि तावत् ।..."

"परन्तु मम अनुबन्धः कश्चन अस्ति ।..."

"कः सः ?"

"त्वं स्वयं गङ्गोत्रीं गत्वा ततः मम कानिचन वस्तूनि आनयेः । तानि वस्तूनि मत्कृते पवित्र- तमानि । मम अन्यानि वस्तूनि तत्रत्येभ्यः साधुभ्यः दत्त्वा गुहायाः स्वमित्वं दण्डिस्वामिने अर्पणीयम् ।"

“अस्तु । एतत् अवश्यं करिष्यामि । परन्तु आदौ आवाभ्यां हैदराबादं प्रति गन्तव्यम् ।...”

“न हि । आदौ त्वं गङ्गोत्रीं गच्छेः । अहं तावत् अत्रैव प्रतीक्षे । दण्डिस्वामी अधुना उत्तरकाश्यां भवेत् । त्वं तेन तत्रैव मिल ।”

“पितः ! अस्तु नाम । अहं तथैव करिष्यामि । गङ्गोत्रीं गत्वा सर्वं साधयिष्यामि । अथवा बदरी-नाथाय एतदुत्तरदायित्वं दत्त्वा सर्वं कारयिष्यामि ।”

“कोऽयं बदरीनाथनामा ?”

“सः अस्ति दिनेशस्य पितामहः ।”

“साधु । उत्तमम् । सः सज्जनः उत्तरदायित्व-शीलः च । तस्मै दशसहस्रं रूप्यकाणि देहि । तेन एतत् सर्वं कर्तुं तस्य आनुकूल्यं भविष्यति ।...”

“उत्तमः प्रस्तावः अयम् । अहं यथायोग्यं सर्वं व्यवस्थापयिष्यामि ।”

अनन्तरदिवसे दमयन्ती गाङ्गोत्रीं प्रति अगच्छत् । बदरीनाथः सर्वं कर्तुं सज्जः अभवत् । ततः तृतीये दिवसे दमयन्ती अभीष्टैः वस्तुभिः सह आगता । गुरोः पवित्रभस्मास्थि, गुरुणा उपयुक्तानि कानिचन वस्तूनि, कानिचन पुस्तकानि च तया आनीतानि आसन् ।

ततः परं दमयन्ती वायुमार्गेण बादलस्वामिनं हैदराबादम् आनयत् ।

भवने दमयन्ती श्रीनिवासं भूतले स्थापयितुम् इच्छति स्म । परन्तु तेन प्रथमतलम् एव चितम् । तस्मै सेवकः अपि नियुक्तः । सरस्वती अपि सेवाकार्यं प्रीत्या अङ्ग्यकरोत् । दिनानि अतीतानि ।

अधुना श्रीनिवासः शयनप्रकोष्ठे पादचारणं कर्तुं शक्तः । व्यायामचिकित्सा त्वरया फलं प्रस्तुतवती । तस्य कृते दमयन्ती विदेशात् विशिष्टं चक्रासन्दम् आनायितवती । दमयन्त्याः मनसि काचिद्  जिज्ञासा । ‘अद्य तस्याः जिज्ञासायाः उपशमनं प्राप्तव्यम्’

इति निश्चित्य कदाचित् सा पितरं पृष्टवती - “पितः ! किम् अभवत् तद्दिवसे ? कथं त्वम् असंज्ञः जातः ?”

“गुहायां किल ?”

“आम् ।”

क्षणं यावत् तूष्णीं स्थित्वा सः अवदत् - “अहो, तथा विशेषः कोऽपि न घटितः ।...”

“भवान् वक्तुं न इच्छेत् चेत् मास्तु ।”

“न तथा । कथम् उच्येत इति विभ्रान्तः अहम् । तस्मिन् दिवसे मया एकः विशेषसमाधिः लब्धः । मनः माम् अवनन्तुं न ऐच्छत् । परन्तु अकस्मात् गुहायाः द्वारे जातस्य कोलाहलस्य कारणतः मम मनः तीव्रया गत्या शरीरे अवनतं जातम् । एतस्मात् शरीरे क्षोभः जातः । ततः रक्तचापे वृद्धिः जाता । तस्मात् एषा अवस्था । मम गुरुः किमर्थं मह्यं पूर्णसंन्यासं न दत्तवान् इति अधुना अहम् अवगच्छामि । सः जानाति स्म यत् मया सा गुहा त्यक्तव्या भविष्यति इति” ।

“भवान् गुहाजीवनस्य त्यागात् अनुतप्तः किम् ?”

“न हि । अहं मम साधनां कुत्रापि कर्तुम् अर्हामि । तथापि गुहाजीवनं श्रेष्ठम् इत्यत्र नास्ति संशयः । परन्तु त्वं मां सामाजिकजीवनस्य निर्वहणाय अनुरोधं न कुर्याः ।..”

“अहं कदापि भवतः साधनाजीवने बाधां न सृजामि पितः ।”

“तदस्तु । वैवाहिकजीवनविषये त्वं किं चिन्तयसि ? विवाहः मनसि अस्ति उत न ?”

“किमर्थम् एतत् पृच्छ्यते पितः ?”

“वेङ्कटेशविषये का भावना अस्ति तव ? सः तु सज्जनः । किमर्थं तेन त्वं परिणीता न भवेः ?”

“किम् एतत् अनुमन्यते भवता ?”

“कुतः न अनुमन्येत ? तस्य नेत्रयोः त्वद्विषयकः अनुरागः स्फुटतया एव दृश्यते !!”

“अस्तु, अहं गभीरतया चिन्तयिष्यामि ।”

दमयन्ती एकवर्षानन्तरं वेङ्कटेशेन परिणीता अभवत् । वेङ्कटेशः अपि तया सह रेड्डिनिवासे एव अतिष्ठत् । परिणयकाले श्रीनिवासः उदासीनः एव अतिष्ठत् । तत्समये तेन हबीबनगरीयं गृहं प्रति गन्तुम् इष्टम् । परन्तु दमयन्ती तत् न अनुज्ञातवती । सा सुदृढम् अवदत् यत् विवाहे पितुः भवतः उपस्थितिः अवश्यमेव अपेक्ष्यते इति । तस्याः अनुरोधम् अङ्गीकृत्य श्रीनिवासः विवाहकाले उपस्थितिम् अङ्गीकृतवान् । विवाहः आडम्बरविहीनः आसीत् । राववर्यः सर्वं प्रबन्धनं कृतवान् ।

विवाहकाले श्रीनिवासः कन्यादानवेलायाम् एव जनसम्मुखम् आगतः । अन्यस्मिन् समये सः स्वीये प्रकोष्ठे एव आसीत् । विवाहानन्तरम् उभौ मधु-चन्द्रिकायै हिमालयं गतौ । बदरीनाथमार्गे जोशी-मठस्य समीपे एकस्मिन् वसतिगृहे तौ कानिचन दिनानि अयापयताम् ।

वर्षद्वयात् परं दमयन्त्याः गर्भसञ्चारः अभवत् । तौ श्रीनिवासम् एतं विषयम् असूचयताम् । चिकित्सकः तां परीक्ष्य अवदत् - ‘गर्भधारणानन्तरं पञ्च मासाः अतीताः’ इति । दमयन्ती उपरितनात् तलात् अधस्तनं भूमितलं प्रति आगन्तुम् ऐच्छत् । किन्तु तत्र एकः एव लोपः नाम - सः आकारेण किञ्चित् लघुः । एतद्विषये तया वेङ्कटेशस्य अभिमतं पृष्टम् । वेङ्कटेशः हसित्वा अवदत् - “मम कृते एतत् राजैश्वर्यम् इव । अन्यच्च, उपरि स्थित्वा त्वया सह निस्सङ्कोचं व्यवहर्तुम् अहं किञ्चित् सङ्कोचम् अनुभवामि स्म । अतः मम कृते तु अयं प्रस्तावः वरतुल्यः एव” इति ।

विवाहानन्तरं दमयन्ती गृहकर्मणि वाणिज्यव्यवहारे च आधिक्येन व्यापृता अभवत् । तस्मात् सा पित्रा सह प्रतिदिनम् एकवारम् अपि मेलितुं न शक्नोति स्म । प्रायः सप्ताहे एकवारं द्विवारं वा सा पित्रा सह होरात्मकं कालं यापयति स्म । श्रीनिवासः अपि दमयन्त्याः विवाहस्य अनन्तरं मितभाषी अभवत् । तस्य शारीरक्याम् अवस्थायाम् उन्नतिः लक्षिता इत्यतः सः अधुना स्वीयानि दैनन्दिनकर्माणि स्वयं निर्वर्तयितुं समर्थः जातः । सः सोपानानि अवतीर्य भूतलम् आगच्छति । गृहस्य उपवने अर्धहोरां यावत् सञ्चारं करोति । तस्य कृते नियोजितः सेवकः अपि निष्कासितः । तस्य योगक्षेमं सरस्वती एव निर्वहति । लौकिकव्यवहारे तस्य निर्लिप्तता पर्यलक्ष्यत ।

श्रीनिवासः सघनाः आध्यात्मिकाः अनुभूतीः लभते स्म । श्रीरामकृष्णः तस्मै एताः अनुभूतीः लघुना उपायेन ददाति स्म । येन एताः उपलब्धयः प्राप्यन्ते, तस्य व्यवहारे उन्मत्तता परिलक्ष्यते । तादृशी उन्मत्तता मयि मा भवतु इति तेन ईश्वरः भृशं प्रार्थितः । एतस्मात् रात्रौ एव सः बहूनि दिव्यदर्शनानि अलभत । मासद्वयं यावत् सः निद्रां न कृतवान् । सः सन्ध्यायाम् अत्यल्पम् आहारं सेवते स्म । रात्रौ उपस्थितायां सः उत्तानमुखतया शयित्वा चक्षुः निमीलयति स्म । सः स्वपन् अस्ति इति सर्वे भावयन्ति स्म । किञ्चित्कालानन्तरम् उरसि उज्ज्वलप्रकाशः उद्भवति स्म । श्रीनिवासः तस्मिन् प्रकाशे मनः एकाग्रं कृत्वा समाधिं गच्छति स्म ।

एकस्मिन् रविवासरे श्रीनिवासः गृहे उपविशन् उपाहारं स्वीकुर्वन् आसीत् । तदा दमयन्ती तदीयं प्रकोष्ठं प्राविशत् । सा पितुः सम्मुखे आसन्दे उपाविशत् । सः स्मयमानः तां सङ्केतेन असूचयत् - 'काफीपेयं स्वीक्रियताम्' इति ।

"अहं प्रकोष्ठे पीत्वा एव आगतवती" इति अवदत् दमयन्ती ।

"अर्धचषकमात्रं स्वीकुरु मया सह ।"

"अस्तु" इति उक्त्वा दमयन्ती काफीपेयं चषके अपूरयत् । श्रीनिवासः उपाहारम् असेवत । दमयन्ती सरस्वतीम् आहूय पीठिकां पर्यष्कारयत् । सरस्वत्यां गतायां श्रीनिवासः सोफासन्दे उपविश्य दमयन्तीम् आह्वयत् ।

"वत्से ! त्वम् अष्ट वर्षाणि यावत् मम अन्वेषणाय कठोरं श्रमम् अकरोः ।..."

दमयन्ती किञ्चित् वक्तुम् उद्युक्ता । श्रीनिवासः सङ्केतेन तत् न्यवारयत् ।

"अहं तव प्रयासेन नितरां हृष्टः अस्मि । तुभ्यं वरः देयः इति मम मनसि स्फुरणम् अभवत् । त्वम् अद्य यत् याचेः तत् भगवत्कृपया फलितं भविष्यति ।"

"पितः ! मम सकाशे अनन्यसदृशः पिता त्वम्, उत्तमं गृहं, प्रभूतं धनम्, उत्तमः आयः इत्यादीनि सर्वाणि सन्ति एव । एवं स्थिते किम् अन्यत् याच्येत मया ?"

"अवसरम् एतं मा व्यर्थीकुरु । एतादृशं स्फुरणं विरलतया एव आगच्छति । उत्कृष्टं याच । अहं तत् दास्यामि ।"

क्षणं विचिन्त्य अवदत् दमयन्ती - "एतदर्थं मह्यं किञ्चित् समयं दद्यात् किम् अन्यत् याच्येत भवान् ?"

"अस्तु । पञ्च निमेषान् यावत् चिन्तय" इति उक्त्वा श्रीनिवासः उदतिष्ठत् । खट्वायाः पार्श्वं गत्वा गुरोः भस्मास्थिपात्रं स्वीकृत्य सः पुनः सोफासन्दे उपाविशत् ।

"मम गुरुं नमस्कुरु" इति असूचयत् सः ।

दमयन्ती शिरः अवनमय्य प्राणमत् ।

"न हि एवम् । साष्टाङ्गं नमस्कुरु" - पुनः असूचयत् श्रीनिवासः ।

दमयन्ती साष्टाङ्गनमस्कारम् अकरोत् ।

"अधुना जानुनी नमयित्वा मम पार्श्वे उपविश" इति संसूच्य श्रीनिवासः तस्याः शिरः स्वक्रोडे निक्षिप्य तस्याः शिरसः स्पर्शः यथा स्यात् तथा अस्थिपात्रं तस्याः शिरसः पार्श्वे गृहीतवान् ।

"एतस्मिन् क्षणे त्वं यत् इच्छसि तत् पूर्णं भविष्यति ।..."

उभौ अपि एतस्याम् अवस्थायाम् अर्धनिमेषं यावत् अतिष्ठताम् । ततः श्रीनिवासः अस्थिपात्रम् अपासारयत् । तत्पात्रं यथास्थाने स्थापयित्वा पुनः सोफासन्दे उपविश्य सः निश्शब्दतां भञ्जयन् अपृच्छत् - "किम् इष्टं त्वया ?"

"न हि उत्कृष्टं किमपि पितः !"

"तथापि वद ।"

“अहं सुखमयं वैवाहिकजीवनम् ऐच्छम् ।...”

“हन्त !!” इति वदन् श्रीनिवासः हस्तं शिरसि अस्थापयत् ।

“किम् एतादृशं तुच्छं वस्तु अभिलषितं त्वया ? जीवने ईदृशः स्वर्णावसरः कदाचित् एव कस्यचित् जीवने आयाति । त्वं तु अन्यत् एव अयाचः । .... अहो, माया कीदृशी !!” - इति वदन् सः उच्चैः अहसत् ।

दमयन्ती लज्जिता सती उपाविशत् ।

“मास्तु चिन्ता वत्से ! तव इच्छा पूर्णा भविष्यति । परन्तु त्वं किमर्थं न उत्कृष्टम् ऐच्छः इति वदसि किल ?”

“पितः ! अहं न वैराग्यं कामये । अहम् आ शैशवात् भवतोः जीवनं सम्यक् अपश्यं ननु ? गृहे सर्वदा समन्वयाभावः एव दृष्टः मया । तस्मात् एव अहं पीडारहितं जीवनम् ऐच्छम् ।...”

“वत्से !! जीवनं तु भवति दुःखसहितम् एव । पीडारहितं जीवनं न भवति कस्यापि । कर्मानुसारेण सुखदुःखे भोक्तव्ये भवतः सर्वेण अपि । तथापि मम आशीर्वादः फलं प्रसूते एव । त्वं शीघ्रमेव पुत्रीं प्राप्स्यति । क्वास्ति वेङ्कटेशः ?”

“सः प्रयोगशालायाम् अस्ति । द्विवादने भोजनार्थं गृहम् आगमिष्यति सः ।”

“द्विवादने एकवारं तेन सह त्वम् आगच्छ । तं विहाय वरदानं पूर्णं न भविष्यति ।”

दमयन्त्यां गतायां श्रीनिवासः गभीरे चिन्तने न्यमज्जत् । तेन अवगतं यत् कस्मैचित् कारणाय सा एतदवस्थायां स्थापिता दैवेन । सा परिवर्तिनि जीवने वैराग्यं लभेत इति श्रीनिवासः प्रार्थितवान् । ‘वस्तुतः तस्याः सत्यगवेषणं तद्दिवसे एव समाप्तम् अभवत्, यस्मिन् दिवसे सा गङ्गोत्रीं प्राप्नोत् । किन्तु मम सत्यगवेषणम् अचिरात् एव पूर्णतां यास्यति ।...’

सः आध्यात्मिकीम् आनन्दसुधाम् आस्वादयन् सत्यगवेषणसमाप्तिक्षणं प्रतीक्षमाणः अतिष्ठत् ।

## ग्रन्थपरिचयः

## कथाचन्द्रिका, मर्म गभीरम्, स्वाध्यायतरङ्गः










त्रयाणां पुस्तकानां लेखकः - आचार्यविजयकल्याणहेमसूरिः

प्र – नन्दनवनकल्पतरुप्रकाशनम्

प्राप्तिस्थानम्

निखिलस्टोसर्, पीरछल्ला शेरी , भावनगर – ३६४००१, दू – ९८७९२२२०१८

आकारः- १/८ डेम्मी, पुटाः - ११०, प्र.मु – २०२३, मूल्यम् - रू. २००/-

आकारः- १/८ डेम्मी, पुटाः - ७०, प्र.मु - २०२३ , मूल्यम् - रू. १५०/-

आकारः- १/८ डेम्मी, पुटाः - १४०, प्र.मु - २०२३ , मूल्यम् - रू. २५०/-

नन्दनवनकल्पतरुप्रकाशनतः त्रीणि संस्कृतपुस्तकानि सद्यःकाले प्रकाशितानि । त्रयः अपि ग्रन्थाः आचार्यविजयकल्याणहेमसूरिवर्येण विरचिताः । कथाचन्द्रिका, मर्म गभीरम् इत्येतत् पुस्तकद्वयं कथासङ्ग्रहरूपम् । ‘कथाचन्द्रिका’यां २१ कथाः सङ्गृहीताः । सर्वाः अपि कथाः त्रिचतुरपुटव्यापिन्यः । दैनन्दिनजीवने घटिताः घटनाः एव विशिष्टचिन्तनपुरस्सरं कथारूपेण अत्र प्रकाशिताः । केषाञ्चन महा-पुरुषाणाम् अपि उल्लेखः अत्र अस्ति । ‘मर्म गभीरम्’ इत्येषः लघुकथासङ्ग्रहः । ७५ कथाः अस्मिन् सङ्ग्रहे विद्यन्ते । पुटव्यापिन्यः (क्वचित् अर्धपुटव्यापिन्यः अपि) लघुकथाः किञ्चन गभीरं तत्त्वं कथयन्ति । एतन्मनसि निधाय एव ‘मर्म गभीरम्’ इति अस्य नामाङ्कनं कृतम् । उभयोरपि पुस्तकयोः भाषा सरला । त्याग-दान-परोपकारादिभावानां श्रेष्ठताद्योतनं मुख्यः सारः । तृतीयं पुस्तकं ‘स्वाध्यायतरङ्गः’ । अस्मिन् पुस्तके २० शास्त्रीयलेखाः उपनिबद्धाः । भारतीयदर्शनानां विचाराणाम् उपनिबन्धनेन सह केचन वैज्ञानिकाः विचाराः अपि अत्र उपस्थापिताः । तत्त्वानां सङ्क्षेपेण सङ्ग्रहः पुस्तके द्रष्टुं शक्यः ।

## रेकीदिव्यशक्तिः




आकारः - डेम्मी, प्र.मु. – २०२४, मूल्यम् - रू. ५०/-, पुटाः - ३८

ले - डा.के.सुधाकररावः, प्र - डा.के.सुधाकररावः, दत्तसाईनिलयः, गान्धिनगरम्, बळ्ळारि, (कर्णा.) दू – ८३२८२२०३६५

सुधाकरराववर्यस्य लघ्वाकारकं पुस्तकम् इदम् । पूर्वं लेखकेन इदं पुस्तकं तेलुगुभाषया प्रकाशितम् आसीत् । तस्य एव संस्कृतसंस्करणम् अधुना प्रकाशितम् । रेकी नाम काचित् चिकित्सापद्धतिः । अत्र हस्तस्पर्शमात्रेण चिकित्सा क्रियते । डा.मिकावो उसुइ, चुजिरोहया, हवायोटकाट इत्येते वैद्याः एतां पद्धतिं प्रख्यापितवन्तः । तेषां विस्तृतविवरणं पुस्तकेऽस्मिन् दत्तम् । केषां रोगाणां कीदृशी चिकित्सा रेकीपद्धत्या करिष्यते इत्यपि विवरणं कृतम् । रेकीविद्यायाः इतिहासः, तत्र गुरुशिष्यसम्बन्धः इत्यादयः अंशाः अपि अत्र वर्णिताः । ४०पुटात्मकम् इदं लघुपुस्तकं रेकीविद्याविषये सङ्क्षेपेण विषयान् उपस्थापयति ।

# पुटकथा

## दृष्टिः

मूलम् - डा. गोविन्द हेगडे

अनुवादः - ज्योति उडुप

भोः ! निमेषं तिष्ठ । अत्रैव कानिचित् पुष्पाणि क्रीणामि" इति सुमतिः यदा उक्तवती तदा दयालुः मार्गमध्ये एव, किन्तु यावत् शक्यं तावत् पार्श्वे कार्यानं स्थगितवान् । समीपे कुत्रापि आरक्षकः न दृष्टः । 'निमेषाभ्यन्तरे सुमतिः पुष्पाणि क्रीत्वा आगच्छति खलु' इति चिन्तयन् सः स्वस्य शरीरं किञ्चित् शिथिलीकृत्य उपविश्य नेत्रे निमीलितवान् । यानस्था आकाशवाणी सुमधुरेण स्वरेण गानं श्रावयन्ती आसीत् ।



निमेषः व्यतीतः स्यात् । पृष्ठतः 'धड्' इति शब्दः श्रुतः । "अये, कः भवान् ? अपि नेत्रे न पश्यतः ?" इति उच्चैः वदन् दयालुः झटिति यानस्य द्वारम् उद्घाट्य बहिः आगत्य स्थितवान् ।

"क्षम्यतां महोदय ! अपराधः कृतः मया । किं करवाणि ? अन्धः अस्मि खलु !" इति वदन् मध्यवयस्कः सः जनः कथमपि चलित्वा एतम् अतिक्रम्य अग्रे गतवान् ।

'हन्त ! मार्गमध्ये यानं स्थापितम् अस्ति मया । तथापि किञ्चित् घट्टनम् अभवत् इति कारणतः - 'कः भवान् ? अपि नेत्रे न पश्यतः ?' इति आक्रोशः अपि मया कृतः ! एवं सति अपि - 'क्षम्यतां महोदय !' इति क्षमायाचनं कृत्वा चलितवान् खलु एषः दृष्टिहीनः !' इति चिन्तयतः दयालोः अन्तरङ्गे विषादभावः उत्पन्नः ।

'महोदय ! क्षन्तव्यः अहम् ! दोषः मम एव' इति वचनं दयालोः कण्ठे एव स्थितम् अभवत् । यतः तावता सः मध्यवयस्कः अन्धः जनः ततः सुदूरं निर्गतवान् आसीत् ।

# वार्ताः

## उत्तरपूर्वाञ्चले भारतीयभाषानुवादकार्यशाला

कुमारभास्करवर्मसंस्कृतपुरातनाध्ययनविश्वविद्यालये फरवरीमासे १५,१६ दिनाङ्कयोः द्विदिवसीया राष्ट्रियभारतीयभाषानुवादकार्यशाला समायोजिता । कार्यशालायाः समुद्घाटनं विश्वविद्यालयस्य कुलपतिः आचार्यः प्रह्लादजोशिवर्यः अकरोत् । उद्घाटनसत्रे गौहाटीविश्वविद्यालयस्य संस्कृतविभागस्य आचार्यः कामेश्वरशुक्लमहोदयः प्रमुखातिथित्वेन, कुलसचिवः डॉ. मदनचन्द्रबेरोमहाभागः विशिष्टातिथित्वेन च उपस्थितौ आस्ताम् । कार्यशालायाम् अध्यापकाः शोधच्छात्राः स्नातकोत्तर-चतुर्थषाण्मासिकच्छात्राः चेति शताधिकाः प्रतिभागिनः आसन् । सुदेष्णाभट्टाचार्या, कामेश्वरशुक्लः, डॉ. गोविन्दशर्मा, डॉ. रुणिमाशर्मा, डॉ. विभूतिलोचनशर्मा, डॉ. गोकुलेन्द्रनारायणदेवगोस्वामी च विशिष्टवक्तृत्वेन उपस्थिताः आसन् । कार्यशालायाः संयोजकः आसीत् डॉ. चिरञ्जीवी अधिकारी । सहसंयोजकश्च आसीत् डॉ. राजीवलोचनशर्मा । समापनसत्रे प्रतिभागिनां प्रतिपुष्टिं स्वीकृत्य प्रमाणपत्रवितरणं कृतम् ।




## दापोलीनगरे संस्कृतसम्मेलनं “रत्नामृतम्”

महाराष्ट्रे उत्तररत्नागिरिजनपदस्य संस्कृतसम्मेलनं रत्नामृतं दापोलीनगरे फेब्रुवारीमासे १८ दिनाङ्के सम्पन्नम् । सम्मेलनस्य प्रमुखवक्ता मार्गदर्शकः च आसीत् श्रीमान् आशिष-आठवले । ‘शिवाजिमहाराजस्य संस्कृतसंवर्धनम्’ इति विषयम् अधिकृत्य सः व्याख्यानं कृतवान् । प्रमुखातिथिरूपेण डॉ. अमितदेवगिरीकरः, श्री आनन्दकरमरकरः च उपस्थितौ । डॉ. सौ. माधवीजोशीवर्या अपि उपस्थिता । अध्यक्षीये भाषणे

स्वमनोगतकथने श्रीमान् मनोहरकाजरेकरः सम्भाषणमार्गेण संस्कृतपठनस्य पाठनस्य च प्रारम्भः करणीयः इति उक्तवान् । सूत्रसञ्चालनं सौ. स्मितासरदेसायी कृतवती । कार्यक्रमस्य प्रास्ताविकं, स्वागतभाषणं च श्रीमान् मुकेशबामणे कृतवान् । सांस्कृतिककार्यक्रमे विविधाः छात्राः सहभागं कृतवन्तः । धन्यवादवितरणं सौ. शर्वरीघाटे कृतवती । सम्मेलने विज्ञानप्रदर्शिनी, वस्तुप्रदर्शिनी, पुस्तकविक्रयणं च आसीत् । चिपळूणं, हेदवी, खेडं, चिखलग्रामः, लवेलं, दापोली इत्यादिभ्यः स्थानेभ्यः आगताः नवत्यधिकाः संस्कृतप्रेमिणः सम्मेलनेऽस्मिन् सहभागिनः आसन् ।

## विजयवाटिकायां प्रान्तयोजनागोष्ठी

आन्ध्रप्रदेशस्य संस्कृतभारत्याः प्रान्तयोजनागोष्ठी विजयवाटिकायां २५.२.२४ तमे दिनाङ्के प्रान्तकार्यालये अमृतभवने समायोजिता आसीत् । अत्र ३० उत्तरदायित्ववन्तः प्रधानकार्यकर्तारः समीक्षां कृत्वा प्रत्येकम् आयामस्य कार्यवर्धनदृष्ट्या विविधयोजनाः समालोचितवन्तः । अस्यां गोष्ठ्यां दक्षिणमध्यक्षेत्रसङ्घटनमन्त्री श्री नागराजः, प्रान्तसङ्घटनमन्त्री बालभारतीवर्यः, प्रान्ताध्यक्षः ज.चन्द्रशेखरवर्यः, प्रान्तकार्यदर्शी नन्दनराववर्यश्च मार्गदर्शनम् अकुर्वन् । प्रान्तकार्यगणः योजनाविषये समालोचितुं पूर्वदिने (२४.२.२४) प्रान्तकार्यालये अमिलत् ।

## जलपाइगुडिजनपदे जनपदसम्मेलनम्




पश्चिमवङ्गराज्ये जलपाइगुडिजनपदे फरवरीमासस्य २५ तमे दिनाङ्के आनन्दचन्द्रशिक्षकशिक्षणमहाविद्यालये संस्कृतजनपदसम्मेलनस्य आयोजनम् अभवत् । अत्र जनपदस्थाः सर्वे संस्कृतज्ञाः, संस्कृतानुरागिणः, कार्यकर्तारः, छात्राः च उपस्थिताः आसन् । कार्यक्रमस्य मुख्यातिथि-रूपेण उपस्थितः आसीत्

उत्तरवङ्गप्रान्ताध्यक्षः श्री सिद्धिनाथपाठकः । विशिष्टातिथिरूपेण डॉ. सरोजकुमारघोषः, डॉ.सुदीपमण्डलवर्यः च उपस्थितौ आस्ताम् । कार्यक्रमस्य अध्यक्षतां डॉ. सरोजकुमारघोषः कृतवान् । अस्मिन् अवसरे छात्रैः गीतं, नाटिका, नृत्यं च उपस्थापितम् । संस्कृतप्रदर्शनी अपि प्रदर्शिता

## अखिलभारतीयः विस्तारकवर्गः

देहल्यां जयरामाश्रमपरिसरे मार्चमासस्य प्रथमदिनाङ्कतः पञ्चदिनात्मकः अ.भा.विस्तारकवर्गः सम्पन्नः । देशस्य विविधस्थानेषु कार्यं कुर्वाणाः २४ विस्तारकाः अस्मिन् वर्गे सोत्साहं भागम् अवहन् । वर्गस्य उद्घाटनम् अ.भा.सङ्घटनमन्त्री श्रीमान् दिनेशकामतः कृतवान् । अ.भा.प्रचारप्रमुखः श्रीमान् शिरीषभेडसगांवकरः वर्गप्रमुखरूपेण मार्गदर्शनम् अकरोत् । समापनसत्रे अ.भा. सम्पर्कप्रमुखस्य श्रीमतः श्रीशदेवपुजारीमहोदयस्य पाथेय-भाषणम् आसीत् ।

## के.सं.विश्वविद्यालयस्य दीक्षान्तसमारोहः

केन्द्रीयसंस्कृतविश्वविद्यालयस्य आद्यः दीक्षान्तसमारोहः मार्चमासस्य सप्तमे दिनाङ्के देहल्यां यशोभूमौ सुसम्पन्नः । कुलपतिवर्येण छात्राः दीक्षोपदेशम् उपदिष्टाः । आतिथेयः आचार्यः श्रीनिवासवरखेडीवर्यः विश्वविद्यालयस्य उत्कर्षयात्रावर्णनेन सभ्यान् अतोषयत् । स्वागतं विधाय सः स्नातकेभ्यः सुसन्देशं प्रायच्छत् । पञ्च छात्राः कुलाध्यक्षस्वर्णपदकानि राष्ट्रपतिमहोदयायाः करकमलाभ्यां स्वयकुर्वन् । पञ्चोत्तरशतसङ्ख्याकानि स्वर्णपदकानि ८६ छात्रेभ्यः प्रदत्तानि । उपपञ्चदशसहस्रेभ्यः छात्रेभ्यः शास्त्री, आचार्यः, शिक्षाशास्त्री, विद्यावारिधिः इत्यादयः उपाधयः वितीर्णाः । प्रा. पी.के. माधवन्वर्यः, प्रा. लीनारस्तोगीवर्या, प्रा.त्रिपाठीगयाचरणवर्यः, प्रा. देवीसहायपाण्डेयवर्यः, शतावधानी रा.गणेशवर्यः चेति पञ्च सुविख्याताः आचार्याः विद्यावाचस्पतिः इति मानदोपाधिना सम्मानिताः । दीक्षान्तसमारोहे पञ्चवाद्यैः मुख्यातिथीनां स्वागतं विहितम् । कुलाध्यक्षादयः, कार्यपरिषत्सदस्याः, अधिष्ठातारः च शोभायात्रायाः शोभाम् अवर्धयन् । राष्ट्रपतिः, विश्वविद्यालयस्य कुलाध्यक्षा महामहिमशालिनी श्रीमती द्रौपदीमुर्मुमहोदया 'भारतस्य प्रतिष्ठे द्वे संस्कृतं संस्कृतिस्तथा' इति सभामुखं संस्कृतेनैव समुदघोषयत् । शिक्षाकौशलविकासोद्यमिता-मन्त्रिणा कुलाधिपतिना श्री धर्मेन्द्रप्रधानवर्येण मेकालेशिक्षानीतेः खण्डनपुरस्सरं भारतीयशिक्षायाः विशिष्य संस्कृतशिक्षायाः महिमवर्णनं कृतम् । पञ्चसहस्राधिकाः कार्यक्रमे उपस्थिताः आसन् ।

## देहलीप्रान्तस्य समीक्षायोजनागोष्ठी

संस्कृतभारत्याः देहलीप्रान्तस्य द्विदिवसीया समीक्षायोजनागोष्ठी मार्चमासस्य नवमदशमदिनाङ्कयोः प्रवृत्ता । अस्यां गोष्ठ्याम् अ.भा.सङ्घटनमन्त्री श्री दिनेशकामतः, उत्तरक्षेत्रसङ्घटनमन्त्री श्री नरेन्द्रः, देहलीप्रान्तस्य उपाध्यक्षः श्री वागीशः, देहलीप्रान्तमन्त्री श्री देवकीनन्दनः, सहमन्त्री श्री सुशीलकुमारः, सहमन्त्री श्री दिनेशयादवः प्रान्तप्रचारप्रमुखः श्री कृष्णमोहनपाण्डेयः, प्रान्तपत्राचारप्रमुखः श्री धनञ्जयः अन्ये च उत्तरदायित्ववन्तः कार्यकर्तारः उप-स्थिताः आसन् । गोष्ठ्यां प्रथमे दिवसे उद्घाटनसत्रे कामतमहोदयः कार्यकर्तॄन् सम्बोधितवान् । सर्वे कार्यकर्तारः स्वोत्तरदायित्वानुगुणम् आयामानुसारं, विभागानुसारं, जनपदानुसारं च सम्पूर्णे वर्षे कृतानां कार्याणां वृत्तं प्रस्तुतवन्तः । द्वितीयदिवसे उत्तरक्षेत्रसङ्घटनमन्त्री श्री नरेन्द्रः आगामिवर्षस्य योजनादृष्ट्या करणीयानि कार्याणि विवृत-वान् । अनन्तरम् आयामशः विभागशश्च गोष्ठीनाम् आयोजनम् अभवत् । आयामप्रमुखाः विभागप्रमुखाश्च विस्तरेण आगामिवर्षस्य लक्षितकार्याणि कथितवन्तः ।




## दक्षिणबङ्गे समीक्षायोजनागोष्ठी

दक्षिणबङ्गे मार्चमासस्य नवमदशमदिनाङ्कयोः रिषडायां गङ्गातीरे प्रेममन्दिरे आयोजिता प्रान्तस्य समीक्षायोजनागोष्ठी सम्पन्ना । अस्य उद्घाटनकार्यक्रमे सम्पर्काधिकारी शशाङ्कशेखरदेवर्यः प्रेरणावर्धकानि वचनानि उक्तवान् । मुख्यातिथिरूपेण विभागप्रचारकः नयनमाजीमहोदयः अपि सङ्घटनविषये उद्बोधितवान् । अस्यां गोष्ठ्याम् अ.भा.सहप्रशिक्षणप्रमुखः डॉ. सचिनकठाळे, प्रान्ताध्यक्षः मान्यः डॉ. तन्मयभट्टाचार्यः, पूर्वक्षेत्रस्य सङ्घटनमन्त्री श्री प्रणवनन्दः, प्रान्तमन्त्री श्री सन्तुदत्तः च उपस्थिताः आसन् । प्रान्तस्य १४ जनपदेभ्यः आगताः ५४ कार्यकर्तारः गोष्ठ्यां सोत्साहं भागं गृहीत्वा अग्रिम-वर्षस्य योजनां कृतवन्तः ।

शिबिरबालकेन्द्रसाप्ताहिकमेलनादिविषये लक्ष्यं स्वीकृतवन्तः । दीक्षान्तसत्रात् पूर्वं प्रश्नोत्तरसत्रम् आसीत् । प्रान्तगणसदस्यानाम् उत्तरदायित्वेषु कानिचन परिवर्तनानि जातानि । बहुभ्यः नूतनोत्तरदायित्वानि दत्तानि ।

## मङ्गलूरुविभागे अखण्डरामायणपारायणम्

मङ्गलूरुविभागे अखण्डरामायणपारायणस्य आयोजनं जनवरीमासस्य १९ तः २१ दिनाङ्कं यावत् प्रवृत्तम् । तस्मिन् मङ्गलूरु-उडुपी-पुत्तूरु-कोडगु-कासरगोडु-जनपदैः भागः गृहीतः । अ.भा. प्रशिक्षणप्रमुखः डा. विश्वासः प्रास्तविकभाषणम् अकरोत् । रा.स्व. सङ्घस्य ज्येष्ठः कार्यकर्ता डा. कल्लड्कप्रभाकरभट्टः उद्घाटनभाषणं कृतवान् । डा. उमामहेश्वरः निर्वहणं कृतवान् । प्रान्तसम्पर्कप्रमुखः श्री के.वी. सत्यनारायणः वेदिकायाम् उपस्थितः आसीत् । समारोपसमारम्भे मुख्यवक्तृरूपेण रा.स्व. सङ्घस्य कुटुम्बप्रबोधनप्रमुखः श्री कजम्पाडिसुब्रह्मण्यभट्टमहोदयः वेदिकायाम् उपस्थितः आसीत् । अ.भा.सङ्घटनमन्त्री श्री दिनेशकामतः, ख्यातः वैद्यः डा. जीवराजसोरके च उपस्थितौ आस्ताम् । रामायणस्य सर्वेषां काण्डानां २४००० श्लोकाः पारायणाङ्गतया जनैः पठिताः । अस्मिन् कार्यक्रमे समाजस्य सर्वे नेतारः, संस्थानां नेतारः च स्वसमयानुकूल्यानुसारं भागं गृहीतवन्तः । श्रीरामस्य राज्याभिषेकस्य १०० श्लोकानां पाठेन पारायणस्य समाप्तिः अभवत् । पारायणस्थले भगवतः रामस्य मूर्तिं स्थापयित्वा पूजायै व्यवस्था परिकल्पिता आसीत् ।

## अक्षरभवने सम्भाषणशिबिरम्

फेब्रवरीमासस्य १२ दिनाङ्कतः २१ दिनाङ्कपर्यन्तं बेङ्गलूरुनगरे अक्षरभवने सम्भाषणशिबिरं प्राचलत् । २२ शिबिरार्थिनः शिबिरे भागम् अवहन् । श्रीमती स्वप्ना शिबिरमेतत् अचालयत् । समारोपकार्यक्रमे कर्णाटकदक्षिणप्रान्तस्य पत्राचारप्रमुखा श्रीमती प्रतिभा उपस्थाय अग्रिमशिक्षणाय सर्वान् बोधितवती ।

## बेङ्गलूरुनगरे अनुवादिनीकार्यशाला

मार्चमासस्य प्रथमदिनाङ्कतः सप्तमदिनाङ्कपर्यन्तं बेङ्गलूरुनगरे अक्षरभवने भारतीयभाषासमिति-सन्देशप्रतिष्ठानयोः संयुक्ताश्रये अनुवादसम्बद्धा काचित् कार्यशाला प्रवृत्ता । अस्यां कार्यशालायां ३० जनाः भागं गृहीतवन्तः । डा.जनार्दनहेगडे, डा. सचिनकठाळे इत्यनयोः मार्गदर्शनेन एषा कार्यशाला सुसम्पन्ना । एतदङ्गतया अन्तर्जालमाध्यमद्वारा उपशताः जनाः कार्यं कुर्वन्तः सन्ति ।

## तिरुपतौ शिक्षकप्रशिक्षणवर्गः

राष्ट्रियसंस्कृतविश्वविद्यालयः, आन्ध्रप्रदेशीया संस्कृतभारती इत्यनयोः संयुक्ततत्त्वावधाने शिक्षाशास्त्रविभागपरतया २९.१. २४ तः १०.२.२४ पर्यन्तं तिरुपतौ रा.सं. विश्वविद्यालये सञ्जाते शिक्षकप्रशिक्षणवर्गे १५० छात्राः शिबिरचालनविषये शिक्षणं प्राप्नुवन् । सम्भाषणसन्देशपत्रिकायाः सम्पादकः श्रीजनार्दनहेगडेवर्यः, शिक्षाशास्त्रविभागस्य शिक्षकाः, योगविभागस्य योगाचार्याः च विविधाः कक्ष्याः स्वीकृतवन्तः । विशेषेण प्रतिदिनमपि वर्गशिबिरं द्रष्टुं सुप्रसिद्धव्यक्तयः समागताः आसन् । वर्गस्य उद्घाटनसत्रे कुलपतिवर्यः श्री जि.एस्. आर्. कृष्णमूर्तिः, समापनसमारोहे श्री मरुधूरिनरसिंहाचार्यः च मुख्यवक्तृभाषणम् अयच्छताम् । शिक्षाशास्त्रविभागात् श्रीमत्याः लतावर्यायाः, श्रीमत्याः कादम्बिनीमहाभागायाः, अस्य वर्गस्य प्रधानसंयोजकस्य मुरलीधररराववर्यस्य, सहसंयोजकानां च पर्यवेक्षणे वर्गोऽयं समाप्तः अभवत् ।

## तिरुपतौ भारतीयभाषासम्मेलनम्

आन्ध्रप्रदेशे तिरुपतौ १२.३.२४ दिनाङ्के भारतीयभाषासमितिः, आन्ध्रप्रदेशस्य संस्कृतभारती, तिरुपतिस्थः राष्ट्रियसंस्कृतविश्वविद्यालयः इत्येताभिः तिसृभिः संस्थाभिः सम्भूय सञ्चालिते एकदिवसात्मके भारतीयभाषासम्मेलने 'मम भाषा मम परिचायिका' इति स्वचित्र(सेल्फी)स्वीकरणम्, मम हस्ताक्षरं मम मातृभाषायाम्, स्वमातृभाषासु शोधपत्र-स्वरचितगीत-कविता-भित्तिपत्रकप्रस्तुतिः इत्यादयः कार्यक्रमाः आसन् । सम्मेलने अस्मिन् कुलपतिवर्यः श्री जि.एस्.आर्. कृष्णमूर्तिः, कुलसचिवा आचार्या आर्.जे. रमाश्रीः, डा.टि.वि.राघवाचार्यः, सहसंयोजकः डा. कुमारवर्यः च भाषाणां महत्त्वं विवृतवन्तः । सारस्वतातिथिः तेलुगु-तमिल-संस्कृतभाषाणां प्राशस्त्यम् अवोचत् । संयोजकः डा.सो.ल.सीतारामशर्मा प्रास्ताविकम् अवदत् । विशिष्टातिथिरूपेण आन्ध्रप्रदेशस्य तेलुगु-संस्कृत-अकादम्याः निदेशिका डा.नन्दमूरिलक्ष्मीपार्वतीवर्या श्री सुदर्शनबेलूरुवर्यः च उपस्थितौ आस्ताम् । समापनसत्रे आन्ध्रप्रदेशस्य संस्कृतभारत्याः कार्यदर्शी डा.नन्दनरावः - 'भाषाः सर्वाः अपि सरस्वतीस्वरूपिण्यः भवन्ति । संस्कृतं, तदितराः सर्वा भाषाः च सर्वथा प्रोत्साहनीयाः' इति अकथयत् । अत्र भागग्रहीतृभ्यः आचार्येभ्यः प्रमाणपत्रवितरणेन सम्मेलनमिदं सुसम्पन्नं जातम् ।

## कञ्चनजङ्घाविश्वविद्यालये शिबिरम्




दक्षिणासमप्रान्ते१९.२.२४ तः २८.२.२४ दिनाङ्कपर्यन्तं प्रवृत्तस्य सम्भाषाप्रशिक्षणस्य समापनं २८ तमे दिनाङ्के जातम् । तस्मिन् शिबिरे ५० शिक्षार्थिनः प्रशिक्षणं प्राप्तवन्तः । शिबिरशिक्षकः आसीत् श्रीमान् सौरभगायेनः । समापने मुख्यातिथिपदे आसीत् डा. उदयश्रेत्री । अध्यक्षपदं स्वीकृतं डा. सुचनप्रधानेन । अस्मिन् गीत-गीतापाठ्नअनुभवकथन-नृत्य-नाटकादयः आसन् । धन्यवादज्ञापनं डा.लीलाधरभट्टराई अकरोत् । सम्पूर्णस्यापि कार्यक्रमस्य सञ्चालिका आसीत् सुश्री हेमन्ताशर्मा । प्रशिक्षणस्य संयोजकः आसीत् डा. प्रदीपशर्मलुईटेलः ।

## सरलमानकसंस्कृतेन लेखनकार्यशाला

राष्ट्रियसंस्कृतविश्वविद्यालयः, तिरुपतिः भारतीयभाषासमितिः, नवदेहली इत्यनयोः सहयोगेन ३.२.२४ दिनाङ्के 'सरलमानकसंस्कृतेन लेखनम्' इत्येषा राष्ट्रियकार्यशाला सम्पन्ना । अस्याः उद्घाटनकार्यक्रमे विश्वविद्यालयस्य विशिष्टाद्वैत-वेदान्त-विभागाध्यक्षः वित्ताधिकारी च आचार्यः च. राघवन्महोदयः, शिक्षाशास्त्रविभागस्य आचार्यः एस्. दक्षिणामूर्तिशर्मवर्यः, संस्कृतसंवर्धनकेन्द्रस्य निदेशकः कार्यशालासमन्वयकश्च डा. सो.ल.सीतारामशर्मा, कार्यशालासंयोजकः डा. उदयनहेगडे च आसन् । कार्यशालायां डा. सो.ल. सीतारामशर्मा, डा. एम्.जि.नन्दनरावः, डा. उदयनहेगडे च संसाधकाः आसन् । कार्यशालायां विश्वविद्यालयस्य आचार्याः शोधच्छात्राश्च भागम् अगृह्णन् ।

## तेलङ्गाणाप्रान्तस्य समीक्षायोजनागोष्ठी

१०.३.२४ दिनाङ्के तेलङ्गाणाप्रान्तस्य वार्षिकी समीक्षायोजनागोष्ठी आयोजिता आसीत् । गोष्ठ्याम् अ.भा.प्रकाशनप्रमुखस्य दत्तात्रेयवज्रळ्ळिमहोदयस्य दक्षिणमध्यक्षेत्रसङ्घटनमन्त्रिणः नागराजवर्यस्य च मार्गदर्शनं प्राप्तम् । प्रान्तोपाध्यक्षस्य श्रीमतः लक्ष्मीनाथाचार्यवर्यस्य अध्यक्षतायां प्रान्तप्रशिक्षणप्रमुखः श्रीमान् गोपालकृष्णः सभासञ्चालनं कृतवान् । आदौ गतवर्षे आयोजितानां कार्यक्रमाणाम् आयामप्रमुखैः आयामशः वृत्तकथनं कृतम् । जनपदशः जनपदकार्यदर्शिभिः समीक्षा कृता । आगामिवर्षस्य वार्षिकयोजनायाः, प्रान्तसम्मेलनस्य च विषये सार्थकचर्चा अभवत् । १२ जनपदेभ्यः आगताः ३५ कार्यकर्तारः गोष्ठ्यां भागं स्वीकृतवन्तः । प्रान्तप्रचारप्रमुखः आनन्दकुमारवर्यः जालस्थानस्य उपयोगविषये उत्तमान् परामर्शान् दत्तवान् ।



महाकोशलस्य समीक्षायोजनागोष्ठी

महाकोशलप्रान्तस्य समीक्षायोजनागोष्ठी मार्चमासस्य नवमदशमदिनाङ्कयोः जाबालिपुरे सम्पन्ना । अस्यां गोष्ठ्याम् अ.भा.सहसङ्घटनमन्त्रिणः श्री जयप्रकाशगौतमस्य मार्गदर्शनं दिनद्वयं प्राप्तम् । गोष्ठ्यां सर्वे मिलित्वा आगामिवर्षस्य कार्यक्रमाणां योजनां कृतवन्तः । वर्षेऽस्मिन् प्रान्तस्तरे कुटुम्बसम्मेलनं गुरुकुलच्छात्रसम्मेलनं चेति नवीनं कार्यक्रमद्वयं योजितम् । गोष्ठ्याम् अष्टभ्यः विभागेभ्यः आगताः चत्वारिंशत् कार्यकर्तारः उपस्थिताः आसन् । उत्तरदायित्वबोधः, कार्यपद्धतिः इत्यादिषु विषयेषु प्रान्तसङ्घटनमन्त्री डा. मनोजपाण्डेयः, प्रान्तमन्त्री डा.कीर्तिकुमारत्रिपाठी इत्येतयोः मार्गदर्शनं प्राप्तम्

## विदेशवार्ताः

## संस्कृतकेन्द्रेषु स्थानीयसमीक्षायोजनागोष्ठ्यः

अमेरिकादेशे संस्कृतभारत्याः कार्यस्थानेषु प्रतिवर्षं स्थानीयसमीक्षायोजनागोष्ठी आयोज्यते । फेब्रवरीमाचर्मासयोः मेरि-लेण्ड्-अर्वैन्-पुष्पाद्रि(फ्लावर्मौण्ड)-सीयाटल्-षाम्बगर्-नेपर्विल्-सिन्सि-इण्डियानापोलिस्-कार्मेल्-लुइस्विल्-कोलम्बस्-प्रभृतिषु संस्कृतकेन्द्रेषु समीक्षायोजनागोष्ठ्यः सुसम्पन्नाः । मार्च-एप्रिल्-मासयोः इतरेषां केन्द्राणां गोष्ठ्यः भविष्यन्ति । एतासु गोष्ठीषु स्थानीयाः कार्यकर्तारः प्रवासिकार्यकर्तृभिः सह मिलित्वा गतसंवत्सरस्य कार्याणां समीक्षां, कार्यकर्तृणां संख्यावर्धनार्थं, विकासार्थं च उपायान्, अग्रिमसंवत्सरस्य योजनाः च परिशीलितवन्तः । छात्राणां मातापितृणां केन्द्रे योजनं, जनेषु उत्साहवर्धनं, संस्कृतकार्यस्य प्रचारः, संस्कृतकेन्द्रविस्तारः, कार्यविस्तारः इत्यादयः विषयाः तत्र चर्चिताः ।

## मेरिलेण्ड्राज्ये विश्वविद्यालयच्छात्रमेलनम्

फेब्रवरीमासस्य सप्तदशे दिनाङ्के मेरिलेण्ड्राज्ये युनिवर्सिटि आफ् मेरिलेण्ड्, जान् हाप्किन्स् इत्येतयोः विश्वविद्यालययोः छात्रैः सह मेलनं प्रवृत्तम् । तत्र विश्वविद्यालयपरिसरे संस्कृतच्छात्रसमूहस्य रचना, संस्कृतकार्यस्य आरम्भः इत्यादयः विषयाः चर्चिताः ।

## टोराण्टोनगरे शिक्षकप्रशिक्षणवर्गः

फेब्रवरीमासस्य सप्तदशे दिनाङ्के केनडादेशे टोराण्टोसंस्कृतकेन्द्रस्य शिक्षकप्रशिक्षणवर्गः मिसस्सागनगरे सम्यक् सञ्जातः । कस्यचित् कार्यकर्तुः गृहे प्रवृत्ते प्रशिक्षणवर्गेऽस्मिन् एकादश कार्यकर्तारः सोत्साहं भागम् ऊढवन्तः । टोराण्टोसंस्कृतकेन्द्रस्य कार्यकर्त्री श्रीमती दिशाठक्करभगिनी एतं प्रशिक्षणवर्गं सञ्चालितवती । पूर्वं प्रशिक्षणं प्राप्तवन्तः, नूतनाः शिक्षकाश्च संस्कृतभारत्याः पद्धत्यनुसारं कथं पाठनीयम् इति पाठ्यांशानां प्रत्यक्षदर्शनेन, चर्चया च सम्यक् अवगतवन्तः ।

## डल्लास्नगरे संस्कृतप्रशिक्षणम्

फेब्रवरीमासस्य २४ तमे दिनाङ्के, राष्ट्रियबालशिक्षणविभागस्य कार्यकर्त्री ललिताभगिनी डल्लासनगरम् आगत्य बालशिक्षणविषये प्रशिक्षणवर्गं चालितवती । बहुविधैः उदाहरणैः, बालवर्गेषु संस्कृतपाठनं सरलरीत्या कथं कर्तुं शक्यते इति सा दर्शितवती । दशाधिकाः कार्यकर्तारः अस्मिन् प्रशिक्षणवर्गे भागं गृहीत्वा लाभान्विताः अभवन् ।

## यु.ऐ.यु.सि.विश्वविद्यालयस्य परिसरे छात्रमेलनम्

यु.ऐ.यु.सि.विश्वविद्यालयस्य परिसरे सि.एस्.एन्.छात्राणां (Campus Samskritam Students Group) वार्षिकमेलनम् आयोजितम् । प्रवासिकार्यकर्तृरूपेण आगतेन युवविभागस्य संयोजकस्य शिवप्रसादमहोदयस्य उपस्तिथौ सञ्जाते मेलनेऽस्मिन् यूऐयूसिविश्वविद्यालयस्य संस्कृतसमूहस्य पूर्वतनी छात्राध्यक्षा अनन्या, छात्रसंयोजकः कल्याणः इत्यादयः भागम् ऊढवन्तः । छात्रसंख्यावर्धनार्थं बहुविधाः उपायाः चर्चिताः ।

## कूपर्टीनोनगरे संस्कृतश्लोकस्पर्धा

फेब्रवरीमासे कूपर्टीनोकेन्द्रे श्लोकानां कण्ठपाठस्पर्धा अभवत् । अतिशिशुगणः, शिशुगणः, बालगणः, किशोरगणः च इत्येवं वयोऽनुगुणं विभिन्नेषु गणेषु विभक्ताः ८८ बालाः, १२ प्रौढाः च आदित्यहृदयस्तोत्रस्य श्लोकान् सोत्साहं सुमधुरं च श्रावितवन्तः ।

## हण्डनर्संस्कृतकेन्द्रे वार्षिकसंस्कृतमेला

संस्कृतभारत्याः वर्जिन्याकेन्द्रे प्रतिवर्षं संस्कृतमेला आयोज्यते, यत्र भारतीयसंस्कृतेः कश्चित् अंशः मुख्यबिन्दुः भवति । फेब्रवरीमासस्य पञ्चविंशतौ गोसंरक्षणम् इत्येतं विषयम् अधिकृत्य आयोजिता अस्य वर्षस्य संस्कृतमेला सुष्ठु सम्पन्ना । 'अस्माकं सनातनधर्मे गवां वैशिष्ट्यं किम्?' 'वयं किमर्थं गाः अम्बाः इव पूजयामः ?' इत्यादीन् विविधान् पुराणेतिहासभगवद्गीतादिभ्यः गोसम्बद्धान् विषयान् सङ्गृह्य बालशिक्षकाः वर्गेषु संस्कृतमेलायाः पूर्वमेव पाठितवन्तः आसन् । फेब्रवरीमासस्य २५ तमे दिनाङ्के गोसंरक्षणमेला दीपप्रज्वालनेन, गोसूक्तेः पठनेन, पञ्चाङ्गश्रावणेन च आरब्धा । बालाः उत्साहेन भारतीयगोजातयः, भारत-अमेरिका-देशयोः गोशालाः, क्रीडाभिः गोविषयपाठनं, पञ्चगव्यस्य वैशिष्ट्यम् इत्यादीन् विविधप्रकल्पान् मेलायां प्रदर्शितवन्तः । तेषां संस्कृतभाषाकौशलं गोविषयपरिज्ञानं च श्लाघनीये आस्ताम् । मुख्यातिथिः गेट्टिस्बगर्विश्वविद्यालयस्य छात्रः, युवविभागस्य कार्यकर्ता च

विवेकरल्लबण्डिमहोदयः बालान् उद्दिश्य संस्कृतविषये स्वस्य अभिरुचिः कथम् उत्पन्ना इति कथितवान्, बालानां मनस्सु गोसंरक्षणं प्रति कर्तव्यदीप्तिं प्रज्वालितवान् च ।

## संस्कृतगीतमालिका

एतस्मिन् वर्षे अयं नूतनः आन्तर्जालिकवर्गः चाल्यते । प्रतिपक्षम् एकवारं प्रवर्तमाने वर्गेऽस्मिन् गीतविषये अनुभविनः कार्यकर्तारः किञ्चन संस्कृतगीतं पाठयन्ति, गीतस्य विश्लेषणमपि कुर्वन्ति । वर्गार्थिनः गीतमाध्यमेन सरलसंस्कृतस्य परिचयमपि सम्भाषणमाध्यमेन प्राप्नुवन्ति । एतावत्पर्यन्तं द्वित्रवारं प्रवृत्तेषु गीतवर्गेषु नैके सोत्साहं भागम् ऊढवन्तः सन्ति ।